## श्रीमच्छङ्कराचार्यस्थापितपृथक्पृथङ्मठवृत्तान्तपत्रिका मठेतिवृत्तस्तोत्राधारतो रचिता ।

## महावाक्यानि तावदन्यतो* लब्धानि ।

| दिक्. | स्थानम्. | मठनामधेयम् | पदम्. | सम्प्रदायः. | क्षेत्रम्. | दैवतम्. | देवी. | आद्यगुरुः. | अधिपतिः. | वेदः. | तीर्थम्. | महावाक्यम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| प्राच्याम् | वङ्गिजगन्नाथम् | गोवर्धनमठः | वनेति अरण्येति वा | भोगवारः | पुरुषोत्तमम् | जगन्नाथः | विमलाख्या | पद्मपादः | प्रकाश-ब्रह्मचारी | ऋक् | महोदधिः | प्रज्ञानं ब्रह्म । |
| दक्षिणस्याम् | शृङ्गगिरिः | शृङ्गगिरिमठः | भारती सरस्वती पुरीति वा | भूरिवारः | रामेश्वरम् | आदिवराहः | कामाक्षी | पृथ्वीधरः | चैतन्य-ब्रह्मचारी | यजुः | तुङ्गभद्रा | अहं ब्रह्मास्मि । |
| प्रतीच्याम् | द्वारवती | शारदामठः | तीर्थेति आश्रमेति वा | कीटवारः | द्वारवती | सिद्धेश्वरः | भद्रकाली | विश्वरूपः | स्वरूप-ब्रह्मचारी | साम | गोमती | तत्त्वमसि । |
| उदीच्याम् | बदरिकावनम् | ज्योतिष्मान्मठः | गिरीति पर्वतेति सागरेति वा | आनन्दवारः | बदरिकावनम् | बदरीनारायणः | पुन्नागिरी | तोटकः | नन्दाख्य-ब्रह्मचारी | अथर्व | अलकनन्दा | अयमात्मा ब्रह्म । |

* कूडलिगिमठात्प्रेषितान्मठाम्नायस्तोत्रात् ।

॥ श्रीः ॥

## ॥ आदितो गुरुपरम्परा ॥

श्रीमहेश्वरः

|

श्रीमन्नारायणः

|

ब्रह्मा

|

वसिष्ठः

|

शक्तिः

|

पराशरः

|

व्यासः

|

शुकः

|

गौडपादः

|

गोविन्दयतिः

|

**श्रीमच्छङ्कराचार्यः**

| **पद्मपादो** | **सुरेश्वरः** | **हस्तामलको** | **तोटको** |
| --- | --- | --- | --- |
| द्वारवत्याम् | शृङ्गगिरौ | जगन्नाथमठे | बदरिकामठे |

शृङ्गगिरेरुपमठाः

| विरूपाक्षमठः | पुष्पगिरिमठः | कुम्भकोणमठः | कूडलिगिमठः | सङ्केश्वरमठः | श्रीशैलमठः | आमणिमठः |
| --- | --- | --- | --- | --- | --- | --- |

# श्रीशङ्करविजयचूर्णिका

संगृहीतशाङ्करकालनिर्णयविषयनानार्वाचीनाङ्गभारतपण्डिताभिप्राय-
पूर्वपीठिकासमन्विता

**व्याचलर ऑव आर्तेत्युपपदधारिणा किन्नूरोपाख्येन**
**वेङ्कटेशात्मजेन गुरुनाथेन**

रचिता.

सा च.

तन्तुपुरस्थसंस्कृतलिटररीअसोसियेशननामक-
परमोदारसंसदाश्रयेण

**मुम्बापुर्यां**
**निर्णयसागराख्यमुद्रणयन्त्रालये मुद्रापयित्वा**
**प्राकाश्यं नीता.**

प्रथमं संस्करणम् ( १००० )

**शाके १८२० विलम्बिसंवत्सरः.**

मूल्यमाणकाष्टकम्.

॥ श्रीः ॥

## प्रस्तावना.

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्कराचार्यचरितसारो मया विशेषतः श्रीमद्विद्यारण्यकृतशङ्करविजयाधारतः क्वचित्क्वचिदानन्दगिरिकृतशङ्करविजयाधारेणापि यथामति गद्यात्मकतयाऽलेखि । तद्गुणावगुणता खलु विद्वद्भिरेव परीक्ष्या । यतः " आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानं " अथवा " हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा " । तादृशपरीक्षावसरस्तु गुणैकपक्षपातिन्या गीर्वाणभाषाभिमानिन्या महौदार्यवत्या संस्कृतलिटररीअसोशियेशन्नामकया भाषोत्तेजनदात्र्या तन्तुपुरवासिन्या परमसंसदा स्वीयोदाराश्रयपात्रतामिमं ग्रन्थमानीय प्रापित इति तत्संसत्कृतगरिष्ठोपकारभारोद्वहनाय नाहमलमस्मि । लब्धमेव मया कृतपरिश्रमस्याखण्डं फलम् । अत्र विद्यमाना हस्तकृतादयो ये केचिद्दोषाः स्युस्ते दोषज्ञैः कृपया दर्शिताश्चेत्तत्तत्कृतसूचनाः परमानन्देन स्वीकृत्य तन्महोपकृतिभारमपि विनम्रेण शिरसा वोढुमेषोऽहं बद्धपरिकरोऽस्मि संवृत्तः । ये केचिदत्र चरित्रलेखनविषयावलोकनार्थं पुस्तकदानेनाथवा काले काले योग्यावश्यकसूचनाकरणेनान्येन वा केनचिद्रूपेण मे साहाय्यं ददुर्वेङ्कटगिरिनिवासिनो ज्योतिर्वित्कुलतिलकाः कृष्णशास्त्रिणः, फाटकोपाख्या गुरुनाथराजा इत्यादयो विद्वद्वर्यास्तत्कृतमहोपकृतिप्रशंसामप्येकया मे रसनया नाहं खलु विधातुं पारये ।

क्लेशः फलेन हि पुनर्नवतां विधत्ते ।

तन्तुपुरम् ।
१८२० विलम्बिवत्सरे
भाद्रपदमासे शुक्ले पक्षे
४ भानौ ।

गुरुनाथः ।

# अनुक्रमणिका ।

॥ श्रीः ॥

## विज्ञप्तिः.

भो भोः सभ्याः

अत्र संस्कृतपाठशालासम्बन्धीयसभायां नानाविषयविवेचनं महोदारबुद्धिभिर्व्यवस्थापकैर्विद्यार्थिनः कार्यन्ते। आदितः प्रभृतीदानीन्तनकालं यावद्वर्षे वर्षे केचिद्विषया विद्यार्थिभिः परीक्ष्यैः कृतविवेचना अभूवन्। अस्मिन्संवत्सरे तु महान्गहनो विषयो निर्दिष्टः। भगवत्पूज्यपादचारित्र्यं यथा गहनतरं तथैव मनोहरतरमप्यस्ति। स्वल्पमतिभिर्मादृशैर्नैव विवेक्तुं पार्यते। तथापि क्षमैकगुणविद्वन्मणिगणौदार्यमवलम्ब्यैवात्र विषये विवेचनाङ्गीकृतिधार्ष्ट्यं मया विधीयते। तत्सर्वे सभ्या हंसनीरक्षीरविवेचनन्यायेन त्यक्त्वैव दोषान्ग्रहीष्यन्ति गुणानित्याशास्य विषयप्रारम्भं कुर्वे। अङ्गीकृतैतद्विषयविवेचनानां परीक्ष्याणां विद्यार्थिजनानां नाहमेकोऽस्मि। तथापि हृद्गतकुतुकभरशमनायैव मयायं विषयः स्वीकृतः। तत्सर्वैः सभास्तारैः सहाध्यक्षैः क्षणमात्रं स्वामूल्यकालोपरोधः सदयं सह्यतामिति प्रणामपुरःसरं विज्ञापयति

गुरुनाथः।

# श्रीशाङ्करकालनिर्णयात्मका पूर्वपीठिका.

यादृशतादृशस्यापि चरित्रवर्णनं यदा यदा क्रियते तदा तदा स क-स्मिन्काले बभूवेति तस्य कालनिर्णयः प्रथममवश्यमेव कर्तव्यः किमुत भगवत्पूज्यपादानाम् । अतस्तं विषयमधिकृत्य किंचिदहं लिखामि ।

साधारणतः कस्यचिन्नरस्य कालनिर्णयस्तत्कृतनानाग्रन्थप्रतिपादितवि-षयवैचित्र्यसम्बन्धाद्यनेकोपायतो जायते । यथाऽऽधुनिकाङ्ग्लभौमपण्डिताः स्वप्रणीतग्रन्थेषु स्वनामनिर्देशपुरःसरं स्वकालनिर्देशमपि कुर्वन्ति तथास्म-त्पूर्वजा नैवैतच्चक्रुः । नेयं तेषां पद्धतिरासीदिति न ते दोषास्पदं भवन्ति । यत्किंचित्कर एवायं विषयस्तैरभिमतः । अत एवैतादृशविषयकं न किं-चित्तैः स्पष्टतरं लिखितम् । कालिदासभवभूतिभारविदण्ड्यादिकविभिरमु-कसंवत्सर एवास्माभिः काव्यानि रचितान्यमुकसंवत्सरे वयं जन्म गृहीतवन्त इत्यादि नैव केनापि लिखितम् । तत्तन्नानाविषयप्रतिपादनस-म्बन्धेनैव तत्तत्कालनिर्णयोऽस्माभिः कर्तव्य इत्यसुकरमेवेदं जातम् । निर्णयकाले तु सूक्ष्मकालो नैवाप्यते स्थूलमानेनैव काल उपलभ्यते । क्वचि-त्संवत्सरशतभेदो जायते क्वचित्संवत्सरशतद्वयत्रयभेदोपि सम्भवति । एव-मेव **श्रीमच्छङ्कराचार्य**कालनिर्णयोऽप्यर्वाचीनाङ्ग्लपण्डितैः प्रोफेसरमो-क्षमूलरटीलप्रभृतिभिर्डाक्तरभाण्डारकरतेलङ्गफाटकाद्यैरपि कृतः । सर्वं तदाङ्ग्लभाषायां लिखितं तदप्यस्मद्गुरुवर्याणां गीर्वाणभाषायां लिखितं चेदवगतं भवितेति विचिन्त्य तन्मया संक्षेपतो लिख्यते ।

**तेलङ्गोपाह्वैः काशीनाथशर्म**भिस्त्र्यम्बकसूनुभिर्यदाङ्ग्लभाषायां लि-खितं प्रथमतस्तत्सारं मयात्र दीयते । काशीनाथशर्माणो महापण्डिताः काव्य-मर्मज्ञास्तीक्ष्णमतयो बभूवुः । तेषां महापाटवमवलोक्येव तदस्तित्वमत्रासह-मानः पाकशासनस्तत्सकाशतोऽध्ययनं चिकीर्षुरकाल एव भरतवर्षदौर्भा-ग्ययोगतः स्वपुरमाहूतवान् । एभिस्तेलङ्गोपाख्यैर्भगवद्गीता गद्यात्मकतया

पद्यात्मकतयाप्याङ्ग्लभाषायां सुरसवत्तया भाषान्तरिता । भर्तृहरेर्नीतिवैराग्यशतकद्वयं मुद्राराक्षसं नाम नाटकमप्याङ्ग्लभाषायां टिप्पणीसमेतं कृतम् । चरमग्रन्थप्रस्तावनायां **श्रीमच्छङ्कराचार्य**कालनिर्णयः सुविस्तरेण तैः कृतोऽस्ति तमहमत्र संक्षेपतो वच्मि ।

केचिद्वदन्ति **श्रीमच्छङ्कराचार्याः** ७८८ क्रिस्ताब्दे जन्मना भरतवर्षं पवित्रीकृतवन्त इति तन्मतं पुरोवर्तिभिः प्रमाणैर्निरस्यते—

१ व्यासप्रणीतवेदान्तसूत्रद्वितीयाध्याये प्रथमे पादेऽष्टादशसूत्रभाष्ये भगवत्पूज्यपादा एवं ब्रुवन्ति । "न हि देवदत्तः स्रुघ्ने सन्निधीयमानस्तदहरेव पाटलिपुत्रे सन्निधीयते, युगपदनेकत्रवृत्तावनेकत्र प्रसङ्गाद्देवदत्तयज्ञदत्तयोरिव स्रुघ्नपाटलिपुत्रनिवासिनोः" । अयमेवास्यार्थः । स्रुघ्नपाटलिपुत्रे नाम द्वे नगरे । तयोरन्तरं महदेव । यस्मिन्दिने देवदत्तो नाम पुरुषः स्रुघ्ने विद्यते स एव पुरुषस्तस्मिन्नेवाहनि पाटलिपुत्रे नैव स्यात् । कस्मात् । युगपदेव यद्यनेकस्थलेषु वसतिः स्यात्तर्हि पुरुषा अपि भिन्नाः स्युः । यथा देवदत्तः स्रुघ्ननिवासी यदा स्रुघ्ने वसति तदैव यज्ञदत्तः पाटलिपुत्रनिवासी पाटलिपुत्रे वसति । दृष्टान्तादस्मादेवमनुमीयते । **वस्तुत एव स्रुघ्नपाटलिपुत्रे नाम द्वे नगरे श्रीमच्छङ्कराचार्यकाले बभूवतुः** । अस्माभिस्त्वितिहासप्रमाणतो ज्ञातं यत्**पाटलिपुत्रं ७५६ क्रिस्ताब्दे नदीसलिलपूरेण नष्टम्** । अङ्गीकृतमेतदितिहासप्रमाणं **श्रीमच्छङ्कराचार्यकालं प्रागेव** ७५६ क्रिस्ताब्दाद्विद्यमानं दर्शयति । ७८८ क्रिस्ताब्दे श्रीमज्जननमिति ये केचिद्वदन्ति तन्मतं त्वनेन सुतरां निरस्तमेव ।

२ अपरं च ।

उपरि निर्दिष्टस्यैव वेदान्तसूत्रस्य भाष्ये भगवद्भिरुच्यते । "सतो हि द्वयोः सम्बन्धः सम्भवति न सदसतोरसतोर्वा । अभावस्य च निरुपाख्यत्वात्प्रागुत्पत्तेरिति मर्यादाकरणमनुपपन्नम् । सतां हि लोके क्षेत्रगृहादीनां मर्यादा दृष्टा नाभावस्य । नहि वन्ध्यापुत्रो राजा बभूव प्राक्पूर्णवर्मणोऽभिषेकादित्येवंजातीयकेन मर्यादाकरणेन निरुपाख्यो वन्ध्यापुत्रो राजा बभूव भवति भविष्यतीति वा विशेष्यते" । अस्यार्थः । सद्वस्तुनोरेव द्वयोः

सम्बन्धो नासद्वस्तुनः सद्वस्तुनश्च वा द्वयोरेवासद्वस्तुनोर्वा। अभावस्त्वसदेव वस्तु। अतः प्रागुत्पत्तेरिति मर्यादाकरणं नैव सम्भवति। लोके सतामेव कृषिगृहादीनां मर्यादा दृष्टा। भगवद्भिरत्र प्रागुत्पत्तेरित्यभावस्य मर्यादाकरणविषयस्य प्राक्पूर्णवर्मणोऽभिषेकान्न वन्ध्यापुत्रो राजा बभूवेति दृष्टान्तो दत्तः। अत्र त्वेवमवश्यमनुमेयं यत्**पूर्णवर्मनामा राजा वस्तुत एव तदानीमासीदिति**। अस्माभिरवगतानां वर्मान्तानां वनवासिकदम्बानां, वेङ्गिपुरपल्लवानां, महोबचन्देलानां, मगधमौखरिणां, काश्मीरोत्पलानामन्यवंश्यानां च राज्ञां नाममालिकायां **पूर्णवर्मेति** नामधेयं द्विर्वर्तते। एकं तु जावाताम्रपत्रिकायां पूर्णवर्मेति नामोपलभ्यते। नैवास्य नरपतेः सम्बन्धो भरतवर्षे लिखिते भाष्ये कृतः स्यादत **एवापरः पूर्णवर्मात्र सम्बध्यते**। अपरः पूर्णवर्मा चीनदेशीयेन पान्थेन हुयिन्स्यांगेन वर्णितः। **स पूर्णवर्मा पश्चिममगधनरपतिरासीदिति**। श्रीमाधवारण्यकृतशङ्करदिग्विजयादपि किंचिज्ज्ञायते तत्किं चेद्भाष्यलेखनात्प्रागूर्ध्वं च श्रीमच्छङ्कराचार्याणां वासो **वाराणस्यामभूद्बदरिकाश्रमे** शान्ते तु केवलं भाष्यलेखनायैव भगवद्भिरुषितमिति। प्रायोऽनेनोत्तरदेशस्थितद्वितीयपूर्णवर्मैव सम्बध्यत इति विशदमेव। काश्या अपि विद्याद्यपीठस्थानत्वेन विख्याततत्वात्तत्र भगवद्वसतिरपि सम्भवति। एवमादिभिर्वृत्तान्तैः **श्रीमच्छङ्कराचार्यैः पूर्णवर्मणोऽभिषेकादूर्ध्वं भाष्यं लिखितं, तद्राज्यशासनकाले च प्रथमतः प्रकाशतां नीतमित्यनुमानमप्यसम्बद्धं** नैव भविष्यति। स्तोकांशेन वादप्रस्तार्थमप्यपरमप्यत्रानुमानमेकं भवति। **किं तच्चेच्छ्रीमच्छङ्कराचार्यपूर्णवर्माणौ समकालीनौ स्याताम्,** भाष्यस्य प्रथमाध्यायोऽपि तावत्पूर्णवर्मणो मृत्योः प्रागेव लिखितः स्यादित्यपि च। इदं चरममनुमानं तावदधस्ताल्लिखितवृत्तान्तैः समर्थ्यते—

( अ ) पूर्णवर्मनाममात्रेणैवैतत्सिद्धं भवति विद्यमानराजं वर्जयित्वा गतनरपतिनामनिर्देशकारणानुपलब्धेः।

( ब ) भगवत्पूज्यपादैर्दत्तदृष्टान्तोपपत्त्यै सतो नरपतेरेव निरुपाख्यत्वेन सम्भावनाऽऽसम्भवनीयतायाः कारणसत्त्वात्।

( क ) असमकालीने पूर्णवर्मणि बौद्धधर्मानुयायिनि, बुद्धगयास्थबोधितरुनाशे ब्राह्मणराजेन कृतप्रयत्नानन्तरं तत्तरुपुनःपोषणे प्रयतमाने, भूसुरैः श्रीमच्छङ्कराचार्यैर्विना केनचित्सम्बन्धविशेषेण तन्नामनिर्देशकारणस्यासत्त्वात् । तादृशसम्बधविशेषस्तु कीदृशश्चेत्स **राजा पूर्णवर्मा राज्यं कुर्वाण एवासीत्** । सर्वोऽयं वृत्तान्तः सत्यत्वेनाङ्गीकृतश्चेत्**पूर्णवर्मणो मगधराज्यशासनकाले श्रीमच्छङ्कराचार्या विख्यातिं प्रापुरित्येव तावत्सिद्धम्** ।

३ अन्यच्च ।

चीनदेशाध्वनीनो नाम्ना **हुयिन्स्याङ्गो** भरतवर्षे ६२९ क्रिस्ताब्दात् षोडश **वर्षाणि** नाम **६४५** क्रिस्ताब्दं यावद्बभ्राम । तत्र ६३७-३८ इत्येतत्संवत्सरद्वयं स **मगधेषु** यापयामास । तेनैवं कथ्यते । पूर्णवर्माभिधानो राजाशोकवंशजानां चरमो नृपतिरिति । तद्दर्शनेऽथवा तद्वंश्यानां भूपतीनां दर्शने नैव तेन पथिकेन यत्नः कृतः । हुयिन्स्यांगेन पूर्णवर्मणो नाम्नः श्रवणात्प्रागेव नाम ६३७-३८ वर्षद्वयात्प्रागेव, राज्यपरिपालनात्पूर्णवर्मा विरतो भूत इत्यनेन **दृश्यते । अतः पूर्णवर्मा प्रायः षष्ठशतकान्त्यभागे ध्रुवं शशासेत्यपि स्पष्टम्** ।

जनरल्कनिङ्ग्यामनाम्ना पण्डितेन पूर्णवर्मणः कालो द्विधा कीर्त्यते ५९०, ६३० इति । अनयोराद्यः कालः सत्यत्वेनोररीकृतकालस्य नेदीयान्नान्त्यः ।

४ अन्येनापि प्रकारेण पूर्णवर्मणः कालो निर्णीयते तद्यथा ।

कर्णसुवर्णनृपतेर्बुद्धगयास्थबोधितरुच्छित्तिकृतप्रयत्नस्य **शशाङ्कस्य** कालनिर्णयेनापि तत्तरुपुनःपोषणकारिणः पूर्णवर्मणः कालोऽवगम्यते । अयमेव स शशाङ्को यो हुयिन्स्यांगवृत्तान्तानुरोधेन हर्षवर्धनशिलादित्यस्य ज्यायांसं भ्रातरं राज्यवर्धनमविश्वासकतया मारितवान् । डाक्टरपदवीभूषिताः पण्डिताः **फर्ग्यूसनननामका** राज्यवर्धनं तत्पितरं प्रभाकरवर्धनं ५८०,६१० क्रिस्ताब्दमध्ये स्थापयन्ति । पण्डित**मोक्षमूलरा**भिप्रायेणैतौ तातसुतौ ६००,६१० वर्षान्तरे बभूवतुः । एवं च प्रायः **शशाङ्कः** ६०५ क्रिस्ताब्दे जीवन्नेवासीत् । पूर्णवर्मणा बोधितरुपुनःपोषणमपि प्रायः **सप्तमशतकाद्यभागे**

कृतं स्यात् । किं बहुना पूर्णवर्मणो राज्यं सप्तमशतकाद्यभागं यावदभूदित्युक्ते नैव बाध्येत। **अयमेव श्रीमच्छङ्कराचार्याणां भाष्यलेखनकालः।**

५ अपरं च ।

**श्रीमाधवीयशङ्करदिग्विजये श्रीमच्छङ्कराचार्यबाणमयूरदण्डिनः समकालीना इति कथ्यते ।**

तद्यथा—

स कथाभिरवन्तिषु प्रसिद्धान्विबुधान्बाणमयूरदण्डिमुख्यान् ।
शिथिलीकृतदुर्मताभिमानान्निजभाष्यश्रवणोत्सुकांश्चकार ॥

(स० १५, श्लो० १४१.)

पण्डितवेबरबुहलरमोक्षमूलरप्रभृतयो **दण्डिनं क्रिस्तशकस्य षष्ठशतके** विद्यमानं समर्थयन्ति । **बाणमयूरौ तु सप्तमशतकाद्यभागे बभूवतुरि**त्यस्माभिः प्रमाणान्तरैर्ज्ञायते । षष्ठशतकान्त्यभागेऽप्यंशतस्तयोश्चरित्रं प्रख्यातिं यातं स्यात् । **एवं श्रीशङ्करबाणदण्डिमयूराणां कालः षष्ठशतकान्त्यभाग** इत्यङ्गीकृतं चेदुपरि निर्दिष्टः कालः सर्वथाप्यविरोधेनैवोपपन्नो भविष्यति ।

६ अन्यच्च ।

धर्माधिकारिणो **बीलपण्डिता** वदन्ति । चीनदेशे चेनवंश्या राजानो ५५७ वर्षतो ५८३ वर्षपर्यन्तं राज्यं शशासुः । तस्मिन् काल **ईश्वरकृष्णसांख्यकारिकाया उपरि श्रीगौडपादाचार्यैर्लिखितं भाष्यं** चीनदेशे चीनभाषायां भाषान्तरितम् । तद्भाषान्तरं तु प्रायः ५७० वर्षे कृतं स्यात् । तदानीं भरतवर्षे जीवत्कर्तुर्ग्रन्थस्य चीनदेशे भाषान्तरं नैव सम्भवति । अतः **श्रीमद्गौडपादाचार्याणां** देहत्यागस्य तद्ग्रन्थभाषान्तरस्य च कालयोर्मध्ये कोऽपि कालो गतः स्यात् । अतो **गौडपादाचार्याः** प्रागेव ५७० क्रिस्तवर्षाद्देहं तत्यजुः । श्रीगौडपादाचार्या भगवद्गोविन्दयतीनां गुरवस्ते तु श्रीमच्छङ्कराचार्याणामाचार्याः । श्रीमच्छङ्कराचार्या अपि गौडपादाचार्यकारिकासमेताया माण्डूक्योपनिषद उपरि स्वकृतभाष्ये **परमगुरुपूज्याभिपूज्ये**ति विशेषणेन **श्रीगोविन्दयतिगुरून् श्रीगौडपादाचा-**

**र्यानाद्रियन्ते** । एवं च यदि श्रीमद्गोविन्दयतयः ५७० क्रिस्ताब्देऽभवं-स्तर्हि ते स्वशिष्येभ्यः श्रीमच्छङ्कराचार्येभ्यस्तदानीमुपदेशं कुर्वाणा आसन् । येन केनापि प्रकारेण क्रियमाणे विचारे **श्रीमच्छङ्कराचार्याः षष्ठशतकतुरीयभागे**ऽभवन्नथवाचार्यकालः ५९० क्रिस्ताब्दान्नैवार्वाचीनो भवितुमर्हतीति सिद्धम् ।

७ पुनस्तेलङ्गशर्माणो लिखन्ति ।

**कोंगुदेशराजकाले नाम तमिलेतिहासे निर्दिश्यते—**

तिरुविक्रमः प्रथमश्चक्रवर्ती श्रीशङ्करेण शैवः कृत इति । १८४८ खिस्ताब्देऽस्य चर्चां कुर्वन्तः पण्डिता **डौसन्नाः** सूचयन्ति । प्रथमतिरुविक्रमस्थाने द्वितीय इति निर्देष्टव्यम् । इति ।

डाक्टरपदवीविराजिताः पण्डिता **भाण्डारकरोपाख्यास्तदानीं** नाम १८७४ खिस्ताब्दे लब्धताम्रपत्राधारेण वदन्ति । श्रीशङ्करेण शैवः कृतो राजा यदि प्रथमस्तिरुविक्रमस्तदाचार्याश्चतुर्थशतके, यदि द्वितीयस्तर्हि षष्ठशतके बभूवुरिति । षष्ठशतककालस्तु तमिलेतिहासकथितकालेन सङ्गतो भवति । **अमुनापि प्रकारेणाचार्याः षष्ठशतकान्त्यभागे बभूवुरिति विशदमेव ।**

इति तेलङ्गपण्डितानामाशयः ॥

इंडियन् ॲटिकेरीनामकभरतवर्षप्राचीनेतिहासस्य षोडशे भागे १८८६ खिस्ताब्देऽक्टोबरमासे नवमदिने **फ्लीटनामकाः पण्डिता** अलिखन् ।

**नेपालवंशावल्यां कथ्यते—**

सूर्यवंशीयवृषदेवनरपते राज्यशासनकालेऽथवा तन्मरणादूर्ध्वं कैश्चिन्मासैः श्रीशङ्कराचार्या नेपाले प्राप्तवन्तः । तत्र श्रीमदाचार्यवसतिकाले स्वपुत्रजन्मसत्त्वात्तेन **शङ्करदेव** इति तस्य नाम कृतम् । इति ।

वृषदेवभूपतिकालस्तु ६३०–६५५ क्रिस्ताब्द इति मया निर्णीतमेव । ( अतः **श्रीशङ्कराचार्याः प्रायः सप्तमशतकाद्यभागे बभूवुः** ।) अनेन प्रकारेणानुमितकालस्य तेलङ्गोपनामकैर्विद्वद्भिर्निर्णीतकालस्य च शतार्द्धसं-

वत्सरान्तरं विद्यते । यथा तथा भवतु **श्रीशङ्कराचार्यकालो नेपालनृपतिवृषदेवकालान्नैवार्वाचीनो भवितुमर्हतीति मया सुधीरमुच्यते ।**

इति फ्लीटपण्डितानां मतम् ॥

इंडियन् अँटिकेरीनामकभरतवर्षप्राक्कालीनेतिहासविषयस्य ग्रन्थस्यैकादशे भागे पण्डिताः **पाठकोपाभिधाः काशीनाथशर्माणो**ऽधुना कारवाराङ्ग्लमहापाठशालामुख्याधिकारिणो १८८२ क्रिस्ताब्दे जूनमासेऽलिखन् ।

**पण्डितवेबरमतेन श्रीशङ्कराचार्या अष्टमशतके बभूवुः । सप्तमशतकेऽथवा नवमशतक** इत्यन्येषामाधुनिकानां पण्डितानां मतम् । एतादृशे महीयसि विषय एतावान्मतभेद इति चित्रम् । तस्य हेतुस्त्वत्रत्यैर्विद्वज्जनैः शृङ्गेरिमठस्थप्राचीनग्रन्थसङ्ग्रहस्यानवलोकनमेव । नातिचिरात्प्राप्यैकं हस्तलिखितपुस्तकं पत्रत्रयमात्रात्मकं वेणुग्रामे गोविन्दभट्टहेरलेकरेत्येषां सकाशादुपलब्धम् । तत्तु बालबोधवर्णैर्लिखितम् । तत्र श्रीशङ्कराचार्यजन्मकालादि निर्दिष्टं तद्यथा ।

दुष्टाचारविनाशाय प्रादुर्भूतो महीतले ।
स एव शङ्कराचार्यः साक्षात्कैवल्यनायकः ।
**निधिनागेभवह्न्यब्दे (३८८९) विभवे शङ्करोदयः ॥**
अष्टवर्षे चतुर्वेदान् द्वादशे सर्वशास्त्रकृत् ।
षोडशे कृतवान्भाष्यं द्वात्रिंशे मुनिरभ्यगात् ॥
**कल्यब्दे चन्द्रनेत्राङ्कवह्न्यब्दे ( ३९२१ ) गुहाप्रवेशः ।**
वैशाखे पूर्णिमायां तु शङ्करः शिवतामगात् ॥

अस्य संक्षेपतोऽर्थः कथ्यते । **निधिनागेभवह्न्यब्दे**=निधयः ९, नागाः ८, इभाः ८, वह्नयः ३, एवं च **३८८९** कलिवर्षेषु गतेषु **विभवसंवत्सरे श्रीमच्छङ्कराचार्या** जज्ञिरे । अधुना गतकलिः ४९९९, तेभ्यः ३८८९ गतानि । अवशिष्टेभ्यः १११० वर्षेभ्यः प्राग्जन्म । अधुना शकाब्दः **१८२०** तेभ्यः १११० गतानि । उर्वरिते **७१०** शालिवाहनशकाब्दे नाम

७८८ क्रिस्ताब्दे जन्मेति विशदम्। स्वाष्टमे वत्सरे चतुरो वेदानधीतवन्तो द्वादशे सर्वशास्त्रकृतो बभूवुः षोडशे भाष्यं चक्रुः। द्वात्रिंशे नाम चन्द्रने-त्राङ्कवह्न्यब्दे=चन्द्रः १, नेत्रे २, अङ्काः ९, वह्नयः ३, एवं च ३९२१ कलिवर्षे नाम ७१०+३२=७४२ शकाब्दे गुहां प्रविश्य वैशाखे पूर्णि-मायां शिवतां जग्मुरिति। एवं च श्रीशङ्कराचार्याः ७८८ क्रिस्ताब्दे-ऽजायन्त ८२० क्रिस्ताब्दे देहं तत्यजुरिति पाठकाख्यानां मतम्।

मयापि श्रीशङ्करचरित्रावगतिसाधनान्वेषणकाले लिखितमेकं पुस्तकं प्राथमिकसर्गचतुष्टयमात्रान्वितं ( दोडवाड ) बृहद्वाडस्थकृष्णभट्टपुत्रलक्ष्म-णभट्टसकाशादुपलब्धम्। उर्वरितग्रन्थलाभविषये प्रश्ने कृते तत्पुस्तकस्वा-मिना मे कथितम्। गुर्लहोसूरग्रामे किर्लोस्करगृहे षोडशसर्गात्मकं पुस्तकं विद्यते। तस्यायं प्रतिलेखस्तस्य सम्पूर्णतया लेखनाय नैवावकाशो लब्धो-ऽत्रान्तरे मूलपुस्तकमेव तत्स्वामिना नीतमिति। मया यद्दृष्टं तत्र "सदानन्दाख्येन विदुषा रचितः शङ्करविजयसार" इति लिखितमासीत्। तत्रापि श्रीशङ्करजन्मकालः कथितस्तद्यथा।

> प्रासूत तिष्यशरदामतियातवत्या-
> मेकादशाधिकशतोनचतुःसहस्र्याम्।
> संवत्सरे विभवनाम्नि शुभे मुहूर्ते
> राधे सिते शिवगुरोर्गृहिणी दशम्याम्॥

अस्यार्थः। एकादशाधिकशतम्=१११, तेन ऊनचतुःसहस्र्याम् (४०००)=४०००−१११=३८८९ कलिवर्षेषु यातेषु विभवे जन्म। अयं कालः पाठकैर्दत्तकालश्चैक एव। ग्रन्थान्तराधारेण तावदिदं लब्धमिति प्रमाणबलवत्तरता। ग्रन्थान्तरं तु कथमिति चेदुच्यते। पाठकैस्तु लिखितं यन्मया पुस्तकं लब्धं तत्पत्रत्रयचतुष्टयमात्रयुतं श्रीमदाचार्यस्थापितपृथक्पृ-थङ्मठसुविस्तरवृत्तान्तयुक्तं चेति। स तु केनापि प्राचीनपण्डितेन श्रीश-ङ्करसंक्षिप्ततरवृत्तान्तात्मको ग्रन्थो रचितः स्यात्। मयावलोकितपुस्तकस्य

तावत् षोडश सर्गाः । अतो भिन्नाविमौ द्वौ ग्रन्थौ । **अतः ७८८ क्रिस्ताब्दे श्रीमतां जन्मेति विशिष्टकालनिर्देशे ग्रन्थद्वयमामाण्यम् ॥**

इंडियन्‌अँटिकेरीनामके पुस्तके १८८७ क्रिस्ताब्दे फेब्रुवरीमासे चतुर्थदिने **डब्ल्यूलोगन्नामका** आङ्ग्लपण्डिता अलिखन् ।

**केरलोत्पत्त्यां कथ्यते—**

"अस्यैव प्रख्यातस्य विजययुद्धस्य काले महापुरुषः **शङ्करपुत्रो जज्ञे ।** स एव पुरतः शङ्कराख्यया भुवि ख्यातोऽभूत्" ।

यस्य राज्यशासनकाले महदिदं विजयान्वितं युद्धं समापेदे स **चेरमानपेरुमल्लोऽ**नकुंदिकृष्णराजेन केरलसिंहासने स्थापित इति श्रूयते । स एव चेरमानपेरुमल्लो भूपो महम्मदीयमतं स्वीकृत्य मक्कायात्रां कृतवानित्यपि केरलोत्पत्तौ कथ्यते । अत एव त्रावणकोरमहाराजा अद्यापि राज्याभिषेककाले भणन्ति "मक्काक्षेत्राद्‌ा मम पितृव्यागमनादिममसिं मत्सन्निधौ स्थापयिष्यामि ।" इति ।

तथाच ।

अर्बस्थाने झफारनामकस्थानसमीपवर्ती कश्चिदर्बदेशीयो ब्रवीति—

"कश्चिन्मलवारनरपतिर्हिन्दुमतस्थो महम्मदमतं स्वीकृत्याब्दुल्लरहिमान् इति नाम गृहीतवाञ्झफारे मृतः कृतखननश्च" इति ।

अद्यापि तत्र झफारे दृश्यमाने तच्चैत्ये (नाम तत्समाध्युपरिस्थितशिलायां) लिखितमास्ते—"**अयं पुरुषः ए. एच्. २१२ वर्षे झफारे प्राप्तः, ए. एच्. २१६ वर्षे मृतश्चेति**" । इमे वर्षाङ्काः क्रिस्तशकानुसारेण ८२७-२८, ८३१-३२ भवन्ति ।

इदमर्बदेशीयस्य वचनं सत्यं चेत् त्रावणकोरमहाराजपितृव्यो मक्कां गत**श्चेरमानपेरुमल्लः क्रिस्तशकस्य ८२७ वर्षात्प्राक् स्वसिंहासनमत्याक्षीदिति स्पष्टम् ।**

अन्यच्च ।

चेरमानपेरुमल्लसिंहासनत्यागकाल एव **मलयालदेशे कोलम्बशकस्या-**

रम्भकालः। स तु ८२५ क्रिस्तवर्षेऽगष्टमासस्य पञ्चविंशदिवसात्प्रारब्ध इति सुप्रसिद्धमेव। ८२७ क्रिस्ताब्दे च मलबारभूपतिर्झफारे प्राप्त इत्युपरि निर्दिष्टम्। मध्ये वर्षद्वयपर्यन्तं क स बभूवेति चेदुच्यते।

तहफतलमुजुहिदीनग्रन्थेऽन्येषु च मापिल्लहस्तलिखितेषु सर्वेषु लिख्यते पुस्तकेषु—

**चेरमानपेरुमल्लः** प्राग्झफारं प्रति गमनात्कश्चित्कालमरबीसमुद्रवेलायां **शाहरस्थाने** कृतवसतिरभूदिति। अयमेव स वर्षद्वयात्मको(८२५–८२७) मध्यकालः।

एवं च मलयालीयसम्प्रदायप्रामाण्येन यदि श्रीमदाचार्याश्चेरमानपेरुमल्लसमकालीनास्तर्हि प्रायः **श्रीशङ्कराचार्या नवमशतकाद्यभागे बभूवुरि**ति सुतरां स्पष्टं भवति।

अयमेवंरीत्या निर्णीतः कालः ( नवमशतकाद्यभागः ) पाठकैर्निश्चितो यः ७८८–८२० इति कालस्तमेव सुतरां समर्थयति न तु तेलङ्गफ्लीटाद्यैर्निर्णीतं षष्ठशतकान्त्यभागं सप्तमशतकमध्यभागं वेति॥

भारतधर्मे नाम स्वरचितग्रन्थे पण्डिता **बार्थनामका** लिखन्ति। श्रीशङ्करः प्रायो विद्वद्भिरष्टमशतके स्थाप्यते नवमशतक इत्यङ्गीकारः साधीयान्प्रतिभाति। सम्प्रदायविदां प्रामाण्येन ७८८ **क्रिस्ताब्दे वैशाखे दशम्यामवतारः**। स तु **द्वितीयशतक** इति केचित्पञ्चम इत्यन्ये ब्रुवन्ति। **चतुर्दशशतके** श्रीमदाचार्या बभूवुरिति "दबिस्तान" ग्रन्थकर्तुर्मतम्॥

पण्डितबार्थग्रन्थनिर्दिष्टकाल एव **मोक्षमूलरवेबरसंज्ञयोः** पण्डितयोरभिमतः॥

पण्डिता **विल्सन्नाख्या** बहुजनमतानि श्रीमदाचार्यावतारकालनिर्णयविषयकाणि प्रदर्श्य तदाधारेण तद्विषयकं स्वमतं स्थापयन्ति। तद्यथा।

(१) कदलीब्राह्मणानां मतेनाचार्या वर्षसहस्रद्वयात् (२०००) प्राग्बभूवुः।

(२) क्रिस्तशकस्य प्रथमशतके बभूवुरिति केषांचिदभिप्रायः।

(३) श्रीमदाचार्या दक्षिणदेशस्थस्कन्दपुरनृपतिना **विक्रमदेवचक्रवर्तिना** समकालीनाः । विक्रमभूपस्य कालस्तु क्रिस्तशकस्य **१७८** वर्षमिति हस्तलिखितकोङ्कदेशेतिहासे लभ्यते ।

(४) ऊर्ध्वमाचार्याणामवतारात् षोडश शतानि (१६००) वर्षाणां व्यतीयुरिति **शृङ्गगिरिवासिनां** विदुषां मतम् ।

(५) शतद्वयाधिकसहस्रात् (१२००) प्रागब्दानामाचार्यावतार इति सम्प्रदायविदामाशयः ।

(६) भोजप्रबन्धे श्रीमदाचार्याणां नामोपलभ्यते । भोजकाले पूज्यतां प्राप्तेष्वाचार्या मुख्या इत्यपि तत्र लिख्यते । अनेनाचार्याः संवत्सरशतानामष्टकान्नवकाद्वा (८०० अथवा ९००) प्राग्बभूवुरिति द्योत्यते ।

(७) शतनवकात् (९००) प्राग्वर्षाणामित्यङ्गीकारो भूतार्थकल्प एवेति डाक्टरपदविराजितानां **टेलराख्य**विदुषामभिप्रायः ।

(८) सहस्रात् (१०००) प्रागब्दानामवतार इति **कोलब्रूक**पण्डितानां मतम् ।

(९) श्रीमच्छङ्कराचार्यग्रन्थपारदृश्वानः पण्डिता **राममोहनराजा** अपि ब्रुवन्ति । आचार्यकालादारभ्याधुनिककालपर्यन्तं पीठाधिष्ठितेषु गुरुषु गण्यमानेषु श्रीमच्छङ्कराचार्याः सप्तमाष्टमशतकान्तरे बभूवुरित्यवगम्यते ।

सहस्रात् (१०००) प्राग्वर्षाणामवतार इति येषां तेषामेव मतं राममोहनराजा अप्यङ्गीकुर्वन्तीत्यनेन दृश्यते ।

एतानि सर्वाणि मतानि दर्शयित्वा विल्सन्पण्डिता लिखन्ति । उपरि निर्दिष्टेषु मतेषु विलोक्यमानेष्वाचार्या हायनानामेकसहस्रात् (१०००) प्राग्बभूवुरित्येव बहुमतं दृश्यते । अतः **श्रीमच्छङ्कराचार्याः क्रिस्तशकस्याष्टमशतकान्त्यभागे नवमशतकाद्यभागे च बभूवुरिति मदीयोऽभिप्रायः ।**

**इति विल्सन्पण्डितानां मतम् ॥**

**एवं च श्रीमच्छङ्कराचार्याः शालिवाहनशके ७१० विभववत्सरेऽथवा ७८८ क्रिस्ताब्दे जज्ञिरे, ७४२ शकाब्देऽथवा ८२० क्रिस्ताब्दे गुहां प्रविश्य देहं तत्यजुरित्यत्र ग्रन्थद्वयप्रामाण्यं, बार्थपण्डितानां विल्सन्पण्डितानामभिप्रायौ च स्पष्टोक्त्योपलभ्यन्ते। तमेव कालं लोगन्मोक्षमूलरप्रभृतिपण्डितमतानि विल्सन्विद्वद्भिः प्रदर्शितानि बहुजनमतानि च सुसमीचीनरीत्या द्रढयन्ति ॥**

पुण्यपत्तने भौमे भौमे दिने मुद्यमाणे **केसरिनामके** विख्याते वृत्तपत्रे १८९८ एप्रिल २६ दिनाङ्किते **पिनाकिसंज्ञापरिचिह्नितो** लेखो वर्तते। तत्र श्रीमच्छङ्करस्थापितमठवृत्तान्तो दत्तो जन्मकालोऽपि लिखितः। तल्लेखगतवृत्तान्तस्तु केनापि परमहंसेन दृष्टद्वारकाशृङ्गगिर्यादिमठेन पिनाकिसंज्ञाय पत्रद्वारा प्रेषितः। तत्र परमहंसो ब्रवीति। १९४० विक्रमसंवत्सरे द्वारकापुरीमगमम्। तत्रत्यमठेऽतिप्राचीनो ग्रन्थ उपलब्धः। तत्र लिखितं यत्**सुरेश्वराचार्या** आचार्यैर्द्वारवतीधर्मासने स्थापिता इति। १८९० क्रिस्ताब्दे सेतुयात्रामुद्दिश्य प्रस्थितो मार्गे मासमेकं नासिकापंचवटीक्षेत्रेऽवसम्। तत्र लब्धे द्रविडोपाख्यै रघुनाथशास्त्रिभिर्दर्शिते शृङ्गगिरिमठात्प्रेषिते पुस्तके लिखितमासीद्यत्**सुरेश्वराचार्याः शृङ्गगिरिपीठे** स्थापिता इत्यादि। अस्तु। उपरि निर्दिष्टैः परमहंसैर्यत्कथितं प्राचीनो ग्रन्थो द्वारवतीमठे मया दृष्ट इति तस्यैव प्रतिलेखस्तैरेव परमहंसैः पिनाकिसंज्ञाय लिखित्वा प्रेषितः। साद्यन्तः सोऽत्र न दीयते। ये केचित्तज्जिज्ञासवः सन्ति तैरुपरि निर्दिष्टदिने (एप्रिल २६,१८९८) मुद्रितकेसरिपत्रिका विलोक्या।

## द्वारवतीमठे लब्धप्राचीनलेखगतवृत्तान्तः—

युधिष्ठिरशके २६३१ वैशाखशुक्लपञ्चम्यां श्रीमच्छङ्करावतारः।
" २६३६ चैत्रशुक्लनवम्यां तिथावुपनयनम्।
" २६३९ कार्तिकशुक्लैकादश्यां चतुर्थाश्रमस्वीकारः।
" २६४० फा० शु० द्वितीयायां गोविन्दपादादुपदेशः।

तत आरभ्य २६४६ ज्ये० कृ० ३० पर्यन्तं बदर्याश्रमे षोडशभाष्य-प्रणयनम् ।

" २६४७ मार्ग० कृ० २ मण्डनेन सह वादारम्भः ।

" २६४८ चै० शु० ४ मण्डनपराजयः ।

.... .... .... .... .... .... .... .... ....

" २६४९ चै० शु० ९ मण्डनमिश्रस्योत्तमाश्रमग्रहणम् ।

" २६५० वै० शु० ३ दिग्विजयमहोत्सवारम्भः ।

" २६५४ पौ० शु० १५ हस्तामलकाचार्याणां शृङ्गपुर-पीठेऽभिषेचनम् ।

.... .... .... .... .... .... .... .... ....

,, २६६३ का० शु० १५ निखिलजगदुद्धारको भगवांश्छ-ङ्करो ब्रह्माद्यर्थितो निजशरीरेणैव विमानमास्थाय कैलासं जगाम । इत्यादि ।

.... .... .... .... .... .... .... .... ....

एतस्माद्यद्यपि नान्यत्किञ्चिन्निष्पन्नं भवति तथाप्याङ्ग्लपण्डितानां या वादविषयायुर्मर्यादाचार्याणां (यदीदृशे ह्यल्पे काले द्वात्रिंशत्संख्यात्मके नैव तैः कृतान्यद्भुतचरितानि सम्भवन्तीति) सा तु सिद्धा भवति। २६३१ **युधिष्ठिरशके शङ्करावतार** इति निर्दिष्टम्। तं शककालमधुना क्षणमात्रं विचारयामः ।

कलियुगप्रमाणम् । प्रतिपञ्चाङ्गं दीयते सर्वेषामपि च विदितं यत्क-लियुगप्रमाणं ४३२००० वर्षाणीति । तत्र षट् शककर्तारो नृपतयः ।

तद्यथा ।

| | | | शकवर्षाणि |
|---|---|---|---|
| १ आदाविन्द्रप्रस्थे युधिष्ठिरः | .... | .... | ३०४४ |
| २ उज्जयिन्यां विक्रमः .... | .... | .... | १३५ |
| ३ प्रतिष्ठानगरे शालिवाहनः | .... | .... | १८००० |

| | | |
|---|---|---|
| ४ वैतरिण्यां सिन्धुसङ्गमे विजयाभिनन्दनः | .... | १०००० |
| ५ कावेरीतीरे नागार्जुनः | .... .... | ४००००० |
| ६ गौडदेशे कल्किभूपतिः | .... .... | ८२१ |
| एवं च कलियुगमानं | .... .... | ४३२००० |

युधिष्ठिरशकारम्भकाल एव कलियुगप्रारम्भकाल इत्यनेन सुतरां स्पष्टं भवति। २६३१ युधिष्ठिरशके श्रीशङ्करावतार इति द्वारवतीमठे लब्धग्रन्थे लिखितम्। २६३१ कलिवर्षेषु गतेषु जन्मेत्येव तस्यार्थः।

अधुना गतकलिः ४९९९ तेभ्यः
२६३१ गतानि
२३६८ वर्षेभ्यः प्राग्जन्म।
अधुना शककालः १८२०
प्राक् शालिवाहनशकारम्भात् ५४८ वर्षेभ्यः प्राग्जन्मेति सिद्धम्।
अयमेवार्थोऽन्यरीत्या दर्श्यते—

३८८९ कलिवर्षेषु गतेषु जन्मेति बहुमतम्।
२६३१ " " जन्मेत्युपरितनो लेखः।
१२५८ वर्षान्तरमनयोः कालयोः।

उपरिनिर्दिष्टाः परमहंसा भणन्ति द्वारवतीमठ एको वृत्तान्तस्तद्विरुद्धो वृत्तान्तोऽन्यः शृङ्गगिरिमठ इति । एवं च यथार्थकालनिर्णयस्यासौकर्यमेव प्राप्तम्। **तथापि सर्वसंशयपदप्रसङ्गे बहुमताङ्गीकारः श्रेयानिति मे भाति॥**

केरलकोकिलनामकमासिकपुस्तकस्य पञ्चमे भागे पञ्चमेऽङ्के कथ्यते।

श्रीमच्छङ्कराचार्याः संवत् (२२) द्वाविंशत्यां शृङ्गगिरौ सुन्दरमेकं मठं निर्ममिरे। संवत् ३० विजयसंवत्सरे चैत्रशुक्ल (१५) पौर्णमास्यां मण्डनेन संन्यासः स्वीचक्रे। ६९५ शालिवाहनशकाब्दे प्रमाथिसंवत्सरे माघशुक्ल-द्वादश्यां सुरेश्वराचार्यसमाधिः। श्रीशृङ्गगिरिधर्मासनाधिपत्योपभोगः सु-

रेश्वराचार्यैः ७९९ वर्षाणि कृत इति तत्रैव मासिकपुस्तके ९९ पृष्ठेऽधस्ताट्टिप्पण्यां लिख्यते ।

विद्याविलासे नाम मुद्रणयन्त्रालये मुद्रिते शृङ्गगिरिमठवृत्तान्तपुस्तके लिख्यते यच्छ्रीसुरेश्वराचार्यैः७२९ वर्षाणि सिंहासनाधिपत्यमुपबुभुजइति। स तु दृष्टिदोषो वा हस्तदोषो वा स्यात् । कुतः । अधुना (यदायं वृत्तान्तो मासिकपुस्तके दत्तस्तदा ) शकाब्दाः १८१३, संवत् १९४७ । शालिवाहनशकापेक्षया प्राक् १३४ वर्षेभ्यः संवत्प्रारेभे । सुरेश्वराचार्यसमाधिः ६९५ शालिवाहनशकाब्दे नाम ६९५+१३४=८२९ संवति। तुर्याश्रमग्रहणकालः ( संवत् ३० ) गतः । ८२९—३०=७९९ वर्षाण्युर्वरितानि । अयमेव सिंहासनाधिपत्योपभोगकाल इति । अत्रोच्यते। अधुना शकाब्दाः १८२०, संवत् १९५४ । संवत् २२ वर्षे मठो निर्मित इत्युपर्युक्तम् । तस्यार्थः १९५४–२२=१९३२ संवद्वर्षेभ्यः प्रागिति । अधुना शकाब्दाः १८२० । १९३२–१८२०=११२ । अधुना क्रिस्ताब्दाः १८९८।१९३२–१८९८=३४ ।एवं च प्राक्शालिवाहनशकाच्छृङ्गगिरिमठस्य निर्मितस्य ११२ संवत्सरा व्यतीयुरथवा प्राक्क्रिस्तशकात् ३४ वर्षाणि जग्मुरिति स्पष्टम् । विश्वस्तेनामुना वृत्तान्तेनाचार्याः क्रिस्तशकापेक्षया प्राक् ३४ वर्षेभ्यो बभूवुरिति द्योत्यते । स्वीकर्तव्योऽयमेवाचार्यकाल इति चेदपरमेकमत्रोच्यते । किं तत् । सुरेश्वराचार्यैः सिंहासनाधिपत्यं ७९९ वर्षाण्युपभुक्तमिति । अत्र न किञ्चित्सम्यक्तयावगम्यते मनसा । नायं सम्बन्धः शीघ्रं मे बुद्धिमारोहति । नायं विषयो मे मतेरवभासते विशदतया । कलौ तु श्रीशङ्करोऽभून्नकृतयुगे न वा त्रेतायां नाथवा द्वापरे । कथं नाम तर्हि श्रीसुरेश्वराचार्यैर्वर्षशताष्टकं स्थितम् । सत्यं श्रीसुरेश्वराचार्यो ब्रह्मावतारः । सत्यं श्रीसुरेश्वराचार्यो महान्योगी बभूव । सत्यं श्रीसुरेश्वराचार्यस्य साधितयोगबलादिष्टकालपर्यन्तं देहधारणसामर्थ्यमभूत् । तथापि कलौ स मानुषवर्ष्मधरः। अमर्त्योऽपि मर्त्यत्वमुपगतो युगानुरोधेन मर्त्यधर्ममेवानुसरेत् । नैतादृशी चमत्कृतिः पापे कलौ

देवादिभिर्दर्शनीयाथवा दर्शिता स्यात्। कदाचिदयमपि वृत्तान्तः सत्यः स्यात्। विषयस्यास्यासत्यत्वेनाङ्गीकृतिधाष्टर्यं नैव मादृशेनाल्पधिया कार्यम्। अत एव दोलाधिरूढं मदीयमिदं मानसम्। अतः संशयनिवृत्तिकालं यावद्बहुमताङ्गीकार एव श्रेयानिति पुनरेकवारमत्र मयोच्यते ॥

॥ श्रीरस्तु ॥

# ॥ श्रीशङ्करो विजयते ॥

## अथ श्रीशङ्करचरितात्मकोत्तरपीठिका ।

### श्रीशङ्करविजयप्रस्तावना ।

यं शैवाः समुपासते शिव इति ब्रह्मेति वेदान्तिनो
बौद्धा बुद्ध इति प्रमाणपटवः कर्तेति नैयायिकाः ।
अर्हन्नित्यथ जैनशास्त्रनिरताः कर्मेति मीमांसकाः
सोऽयं नो विदधातु वाञ्छितफलं त्रैलोक्यनाथो हरिः ॥ १ ॥
यद्भाष्याम्बुजजातजातमधुरप्रेयोमधुप्रार्थना-
सार्थव्यग्रधियः समग्रमरुतः स्वर्गेऽपि निर्वेदिनः ।
यस्मिन्मुक्तिपथो मुमुक्षुमुनिभिः सम्प्रार्थितः सम्बभौ
तस्मै भाष्यकृते नमोऽस्तु भगवत्पादाभिधां बिभ्रते ॥ २ ॥

श्रीशङ्करस्याद्भुतचरित्रावगतौ साधनानि कतिचित्सन्ति तद्यथा । श्रीशङ्करस्य प्रमुखाः शिष्याश्चत्वारः **पद्मपादो हस्तामलकः सुरेश्वरस्तोटकश्चेति** । एभिः सर्वैरेव चतुर्भिः पृथक्पृथक्तया शङ्करचरित्रमलेखीति श्रूयते । आनन्दगिरिणापि ग्रन्थस्त्वेको लिलिखे । उपरि निर्दिष्टशिष्यचतुष्टयरचितग्रन्थसारस्तु श्रीमद्विद्यारण्यैः कृतः । तस्य सारः सदानन्दाख्येन विदुषा रचितः । अयं सदानन्दाख्यो विद्वानर्वाचीनो भाति । प्रायो नायं पद्मपादो यस्य नामधेयं सनन्दन इत्यभूत् । माधवीयशङ्करविजयस्य सदानन्देन सारः कृत इति कथमनुमीयत इति चेदुच्यते ।

१ माधवाचार्यकृतशङ्करविजये य इतिहासक्रमः स एवात्र ।

२ तत्रत्यश्लोका अप्यत्र केचित्सन्ति । तद्यथा ।

काण्डत्रयात्मके वेदे प्रोद्धृते स्याद्विजोद्धृतिः ।
तद्रक्षणे रक्षितं स्यात्सकलं जगतीतलम् ॥

मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ इत्यादयः ।

अनेनैकस्य ग्रन्थादितरेण श्लोका गृहीता इति सिद्धमेव । केन कस्य ग्रन्था-दित्यनुमेयम् । सदानन्दग्रन्थो लघुर्वर्तते माधवीयो महीयानतः प्रथमो द्वि-तीयस्य सारः ।

३ आचार्यजन्म पृथक्पृथग्ग्रन्थकारैः पृथक्पृथक्तया वर्ण्यते । श्रीमन्माधवकृतग्रन्थे विद्यमानो जन्मवृत्तान्त एवात्रावलोक्यते ।

४ यदि सदानन्दग्रन्थाधारेण माधवीयो ग्रन्थो रचितोऽभविष्यत्तर्हि तत्र निर्दिष्टो मुख्यविषयभूतो जन्मकालोऽपि माधवेनादास्यत । परं न दत्तः । अतः सदानन्देनैव माधवीयग्रन्थसारः कृत इत्यनुमीयते ।

एतद्ग्रन्थसाधनादपि श्रीशङ्करचरित्रमवगतं स्यात् । माधवीयग्रन्थ एव प्रचारे भवति । अतो यो मया वृत्तान्तो लिख्यते स मुख्यतो माधवीय-शङ्करविजयाधारतः कचित्कचिदानन्दगिरिशङ्करविजये कथितो वृत्तान्तो-ऽपि संक्षेपतो दीयते । माधवीयग्रन्थे सर्गाः षोडश । तत्तन्नामधेयानि पुरतो मया वर्ण्यन्त एव । प्रतिसर्गगतकथाभागोऽपि लिख्यते ।

१ प्रथमे—शङ्करावतारप्रस्तावना शिवदेवतादिसंवादादिरूपा निरूपिता ।

२ द्वितीये—शङ्करोत्पत्तिः ।

३ तृतीये—तत्तत्सुरावतारनिरूपणम् ।

४ चतुर्थे—अष्टमवर्षात्प्राग्यद्विचित्रं चरितं स्थितं तद्वर्ण्यते ।

५ पञ्चमे—आजीवन्मुक्तिसुखसाधनाय तुरीयाश्रमप्राप्तिर्निरूप्यते ।

६ षष्ठे—सम्प्रदायादागता याध्यात्मविद्या सम्प्रदायस्य विच्छिन्नत्वाद्गता तस्याः सम्यक्स्थापनं वर्ण्यते ।

७ सप्तमे—शङ्कराचार्यस्य व्यासाचार्यस्य च परस्परसंदर्शनात्मकमाश्चर्यं निरूप्यते ।

८ अष्टमे—मण्डनमिश्रशङ्करयोः संवादः ।

९ नवमे—सरस्वतीसाक्षिकं मुनेः सर्वज्ञत्वनिर्वाहोपायचिन्तनम् ।

१० दशमे—योगशक्त्याऽमरकाख्यभूपालकायप्रवेशनम् ।

११ एकादशे—नृपतिकायप्रवेशानन्तरं कामकलाबोधनं तासां प्रकटीकरणं च ।

१२ द्वादशे—हस्तामलकस्य तोटकस्य चेति द्वयोः शिष्यत्वेनाश्रयणम् ।

१३ त्रयोदशे—वार्तिकान्ताया ब्रह्मविद्यायाः प्रचारः ।

१४ चतुर्दशे—पद्मपादस्य नाम शिष्यस्य तीर्थयात्रानिरूपणम् ।

१५ पञ्चदशे—श्रीशङ्करस्य दिग्विजयात्मकं कौतुकं कीर्त्यते ।

१६ षोडशे—अन्त्ये सर्गे महात्मनः शङ्करस्य शारदापीठवासो वर्ण्यते । इत्येवं प्रकारेण षोडशभिः सर्गैः संक्षेपतः शाङ्करी कथा प्रतिपाद्यते ।

मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ इत्यादयः ।

अनेनैकस्य ग्रन्थादितरेण श्लोका गृहीता इति सिद्धमेव । केन कस्य ग्रन्थादित्यनुमेयम् । सदानन्दग्रन्थो लघुर्वर्तते माधवीयो महीयानतः प्रथमो द्वितीयस्य सारः ।

३ आचार्यजन्म पृथक्पृथग्ग्रन्थकारैः पृथक्पृथक्तया वर्ण्यते । श्रीमन्माधवकृतग्रन्थे विद्यमानो जन्मवृत्तान्त एवात्रावलोक्यते ।

४ यदि सदानन्दग्रन्थाधारेण माधवीयो ग्रन्थो रचितोऽभविष्यत्तर्हि तत्र निर्दिष्टो मुख्यविषयभूतो जन्मकालोऽपि माधवेनादास्यत । परं न दत्तः । अतः सदानन्देनैव माधवीयग्रन्थसारः कृत इत्यनुमीयते ।

एतद्ग्रन्थसाधनादपि श्रीशङ्करचरित्रमवगतं स्यात् । माधवीयग्रन्थ एव प्रचारे भवति । अतो यो मया वृत्तान्तो लिख्यते स मुख्यतो माधवीयशङ्करविजयाधारतः क्वचित्क्वचिदानन्दगिरिशङ्करविजये कथितो वृत्तान्तोऽपि संक्षेपतो दीयते । माधवीयग्रन्थे सर्गाः षोडश । तत्तन्नामधेयानि पुरतो मया वर्ण्यन्त एव । प्रतिसर्गगतकथाभागोऽपि लिख्यते ।

१ प्रथमे—शङ्करावतारप्रस्तावना शिवदेवतादिसंवादादिरूपा निरूपिता ।

२ द्वितीये—शङ्करोत्पत्तिः ।

३ तृतीये—तत्तत्सुरावतारनिरूपणम् ।

४ चतुर्थे—अष्टमवर्षात्प्राग्यद्विचित्रं चरितं स्थितं तद्वर्ण्यते ।

५ पञ्चमे—आजीवन्मुक्तिसुखसाधनाय तुरीयाश्रमप्राप्तिर्निरूप्यते ।

६ षष्ठे—सम्प्रदायादागता याध्यात्मविद्या सम्प्रदायस्य विच्छिन्नत्वाद्रता तस्याः सम्यक्स्थापनं वर्ण्यते ।

७ सप्तमे—शङ्कराचार्यस्य व्यासाचार्यस्य च परस्परसंदर्शनात्मकमाश्चर्यं निरूप्यते ।

८ अष्टमे—मण्डनमिश्रशङ्करयोः संवादः ।

९ नवमे—सरस्वतीसाक्षिकं मुनेः सर्वज्ञत्वनिर्वाहोपायचिन्तनम् ।

१० दशमे—योगशक्त्याऽमरकाख्यभूपालकायप्रवेशनम् ।

११ एकादशे—नृपतिकायप्रवेशानन्तरं कामकलाबोधनं तासां प्रकटीकरणं च ।

१२ द्वादशे—हस्तामलकस्य तोटकस्य चेति द्वयोः शिष्यत्वेनाश्रयणम् ।

१३ त्रयोदशे—वार्तिकान्ताया ब्रह्मविद्यायाः प्रचारः ।

१४ चतुर्दशे—पद्मपादस्य नाम शिष्यस्य तीर्थयात्रानिरूपणम् ।

१५ पञ्चदशे—श्रीशङ्करस्य दिग्विजयात्मकं कौतुकं कीर्त्यते ।

१६ षोडशे—अन्त्ये सर्गे महात्मनः शङ्करस्य शारदापीठवासो वर्ण्यते । इत्येवं प्रकारेण षोडशभिः सर्गैः संक्षेपतः शाङ्करी कथा प्रतिपाद्यते ।

## ॥ श्रीशङ्करो विजयते ॥

# अथ श्रीशङ्करचरित्रप्रारम्भः ।

### १ श्रीशङ्करावतारप्रस्तावना ॥

श्रीशङ्करावतार-प्रस्तावना ।

पुरैकदा सर्वे देवगणाः कैलासगिरिमुपेत्य चन्द्रशेखरं साष्टाङ्गं प्रणिपत्योचुः । भो भो महादेव दर्शनदूषकैर्बौद्धैर्बुद्धप्रणीतागमालम्बैः सर्वेयं वसुन्धरा व्याप्ता । सर्वे जना आम्नायदूषकाः समपद्यन्त । नित्यकर्माणि सन्ध्यावन्दनादीन्येव तावद्विजा न कुर्वन्ति ज्ञानवैराग्यनिष्ठा वार्ता तु दुर्लभैव जाता । तदधुना श्रौतमार्गप्रवर्तनाय विना त्वां नान्यन्नः शरणमालोक्यते । इत्यभ्यर्थितः शम्भुस्तान्प्रत्यभाषत । वैराग्यज्ञानध्यानपुरःसरो निवृत्तिमार्गस्तूच्छिन्न इति मे विदितम् । न मे तथा गिरिजापि प्रिया यथास्त्यद्वैतमार्गः । अतो मानुषीं तनुमाश्रित्य परमहंसपदधरोऽहं वः सर्वान्मनोरथान्पूरयिष्यामि । दुर्दर्शनविनाशाय सद्धर्मप्रकाशाय वेदार्थयाथात्म्यप्रकटनाय च शङ्कराख्यो भुवि भूत्वा व्यासप्रणीतवेदान्तसूत्रभाष्यं चतुर्भिः शिष्यैः सहितः स्वयमहं करिष्यामि । तद्भवन्तोऽपि सर्वे तत्कार्यनिर्वर्तनायैव मम सहायास्तत्तन्मानुषीस्तनूर्धृत्वा मदीयागमनं प्रतिपालयन्तः सन्तु । इति सुरान्समादिश्य कुमारमवलोक्य प्राह ।

काण्डत्रयात्मके वेदे प्रोद्धृते स्याद्विजोद्धृतिः ।<br>
तद्रक्षणे रक्षितं स्यात्सकलं जगतीतलम् ॥

अग्रिमं ज्ञानकाण्डमहमुद्धरिष्यामीति यदधुनैव मया देवेभ्यः प्रतिश्रुतं तत्त्वया ज्ञायत एव । अतस्त्वं भूतलमवतीर्य मानुषशरीरधरो भूत्वा

सुब्रह्मण्यावतारः ।

विशिष्टं कर्मकाण्डमुद्धर । त्वं पृथिव्यां सुब्रह्मण्याख्यां गमिष्यसि । विष्णुशेषौ सङ्कर्षणपत-

**ञ्जली भूत्वा** मध्यमं देवताकाण्डमुद्धरिष्यतः । तव सहायो **ब्रह्मापि मण्डनो** नाम भूसुरो, **महेन्द्रस्तु सुधन्वाख्यो** भूपतिर्भवितेति । अतस्ता-वुभौ यथानिर्दिष्टं स्वं स्वं कार्यं चिकीर्षू पृथिव्यामजनिषाताम् । तदा **कु-मारोऽपि भट्टपादाख्यया** महीतलेऽजनिष्ट ।

भट्टपादस्य सुधन्वनगरीं प्रति गमनम् ।

अथ केनचित्कालेन स जैमिनिसूत्रितं वेदतात्पर्यं स्फुटयन् सुधन्वनगरीं प्राप । तत्र राज्ञा विधिवत्पूजितः सभायामुच्चैरासनमध्यासीनः सभासमीप-विटपिश्रितकोकिलकूजितमाकर्ण्य तद्व्याजात्सौगतान् पार्श्वस्थान् सर्वान्क्षोभ-यन्नेव राजानमिदमाह ।

मलिनैश्चेन्न सङ्गस्ते नीचैः काककुलैः पिक ।
श्रुतिदूषकनिर्ह्रादैः श्लाघनीयस्तदा भवेः ॥ इति ॥

इमां तात्पर्यगर्भितां वाचं निशम्य सकलाः षडभिज्ञा भृशं प्रकुपिताः । तदानीं भट्टपादो युक्तिकुठारेण बुद्धसिद्धान्तशाखिनं छिन्दानः पुनरपि सौगतक्रोधज्वालाः संवर्धयामास । एवमेकतः पण्डिता भट्टपादा अन्यतः सौगतपण्डिताः परस्परदर्शनं चिच्छिदुः । अन्ते बुद्धाः सम्पूर्णतया परा-जिताः । तदा सुधन्वनृपतिरवादीत् । भो भो उभयपक्षीयपण्डिताः शृणुत तावन्मदीयामुक्तिम् । जयाजयौ तावद्विद्यायत्तौ । येषां विद्याधिका जय-स्तान् समाश्रयति । नैतेन मततत्त्वं प्रकाश्यते । अत एवं क्रियताम् । **यो गिरेः शृङ्गात्पतित्वाऽव्ययो भविष्यति तस्यैव मतं ध्रुवमित्यस्माभिर्ज्ञास्यत** इति । ततः स द्विजाग्र्यस्तु वेदान्स्मरन् गिरेः शृङ्गं समारुह्य

सुधन्वनो मतनिर्णये विचारः ।

"यदि वेदाः प्रमाणं स्युर्भूयात्काचिन्न मे क्षतिः ।"

( माधवः. )

इत्युक्त्वाद्रेः शृङ्गान्निपतितो भूमौ तूलराशाविवाक्षत एवापतत् । य-दीति संशीतिद्योतकशब्दप्रयोगान्नष्टैकनयनोऽभूत् । एवमक्षतं तं पण्डित-माकर्ण्य सर्वे द्विजाः सर्वाभ्यो दिग्भ्यः समाययुः । तदपि चित्रं कृत्यं

सुधन्वनृपतिरवलोक्य खलसंसर्गदूषितमात्मानं बहुधा विनिन्द्य ततः प्रभृति श्रुतिषु श्रद्धां संदधे। तदा सौगतैरुक्तम्।

सौगतानामननुमतिः।

नेदं मतनिर्णये प्रमाणं मणिमन्त्रौषधिभिरपि देहरक्षासम्भवसत्त्वात्। तदा प्रत्यक्षार्थे दुर्विधैरन्यथा नीतं वीक्ष्य कोपाविष्टचेतसा राज्ञोक्तम्। भवतः सर्वान् प्रश्नमेकं प्रष्टुकामोऽहम्। **ये न प्रतिवक्तुं प्रभवन्ति तान्यन्त्रोपलेषु सद्यो घातयिष्यामि।** इति विहितप्रतिज्ञो नरपतिर्घट**माशीविषपूरितमेक**मानीय किमत्रास्तीति द्विजसौगतानन्वयुनक्।

सुधन्वना कृतः प्रश्नस्तदुत्तरानुक्तौ वधनिश्चयश्च।

श्वः प्रातरेवास्योत्तरं वक्ष्याम इति द्विजसौगता भूपालमुक्त्वा प्रतिजग्मुः। तस्यां रात्रौ द्विजास्तु कण्ठद्वयसपाथसि स्थित्वा सूर्यं प्रसाद्य कुम्भस्थवस्तुविषयकप्रतिवचनदानरीतिं जज्ञुः। अन्येद्युः सौगताः समागत्य भुजगोऽत्रास्तीत्यवादिषुः। **भोगशयनो भगवान् कृष्णोऽत्रास्तीति द्विजाः प्राहुः।**

प्रतिवचनम्।

राजमुखं म्लानिमुपाददे। तत्क्षण एव **द्विजोक्तिः सत्येत्यशरीरिणी वागुदचरत्।** तत्र तदा स राजा कुम्भे मधुरां मधुरिपुमूर्तिमेव प्रेक्ष्य परां मुदमवाप। श्रुतिविदितरवाक्यमलीकं ज्ञात्वा श्रुतिविद्विषां सर्वेषां वधायावनीपतिराज्ञां व्यदधात्। तदाज्ञानुरोधेन सर्वे योगविघ्ना धर्मद्विषः सौगता निहताः।

जैनवधः।

एवं

कुमारिलमृगेन्द्रेण हतेषु जिनहस्तिषु।
निष्प्रत्यूमहवर्धन्त श्रुतिशाखाः समन्ततः॥

(माधवः.)

एवं च निगमविहितमार्गे सम्प्रवर्तिते भगवान्भवः स्वयं धरातले सम्भवेच्छामकार्षीत्।

**॥ इति कुमारप्रादुर्भावो नाम प्रथमः सर्गः॥ १॥**

## २ अथ शङ्करोत्पत्तिः ॥

केरलनृपतिस्वप्नः ।

अथैकदा भगवान्महेश्वरः केरलनरपतिस्वप्ने स्वयं प्रकटो भूत्वाह । अत्र पूर्णाभिधाया ह्रदिन्यास्तटे मत्कृते रम्यं प्रासादमेकं परिकल्प्य निरन्तरं मदीयां सपर्यां सपरिकरो विधिवद्विधेहीति । भगवदाज्ञप्त्यनुसारेण नृपतिरपि नित्यं भगवदर्चनां भक्त्यैकया सप्रजो व्यधात् । तस्यानतिदूरे **कालटिनामाग्रहारे** कश्चिद्वेदवेदाङ्गपारगो विद्याधिराज इति महतीं ख्यातिं यातो भूसुरोत्तमो न्यवसत् ।

शिवगुरुकथा ।

तस्य शिवगुरुर्नाम तनूजोऽभूत् । स विद्यार्थी गुरुगेहं गतः । साङ्गान्वेदानधीत्य गुरोराज्ञया गृहं प्रतिनिवृत्य स गुरुपित्रोराग्रहात्स्वानुरूपां पतिपरायणां वधूं लब्ध्वा कंचित्कालं यथोचितं भोगं बुभोज । एवमेव बहुतिथे काले याते तौ दम्पती पुत्रजन्मन्यास्थां विदधतुः ।

शिवगुरुकृतेश्वरार्चा ।

परमेश्वरपूजनेनैव पुत्रं प्राप्स्याव इति प्रियावाक्यमाकर्ण्य शिवगुरुरपि गुरुं शिवं भक्त्या सभार्यः पूजयन्नास्ते स्म । एकदा भगवदर्चाकाले निद्रावशं गतस्य तस्य स्वप्ने महेश्वरः समागत्य वत्स वरं वृणीष्वेत्यभिदधे । पुत्रं देहीत्युक्ते किं गुणसम्पन्नं सर्वज्ञमेकमेव वा निर्गुणान्बहून् सुतान् वाञ्छसीत्युक्तः शिवगुरुरेकमेव भवन्तमिव सर्वज्ञं सर्वशक्तिं च पुत्रं वृण इत्युवाच । तदाकर्ण्य तथास्त्विति महेश्वरेणोक्तम् । तस्यां रात्रौ स शिवगुरुः शाम्भवतेजसा युक्तः

श्रीशङ्करजन्म ।

"तपसा शोधिते क्षेत्रे शैवं तेजः सिषेच तत्" ॥

अथ केनचित्कालेन सुमुहूर्ते शुभलग्ने ह्युच्चस्थे ग्रहपञ्चके सा शुभा नारी **शङ्कराख्यं** जगद्गुरुं पुत्रं सुषुवे ।

प्रासूत तिष्यशरदामतियातवत्या-<br>मेकादशाधिकशतोनचतुःसहस्र्याम् ।<br>संवत्सरे विभवनाम्नि शुभे मुहूर्ते<br>राधे सिते शिवगुरोर्गृहिणी दशम्याम् ॥

( सदानन्दकृतशङ्करविजयसारः. )

स द्विजवर्योऽपि पुत्रजन्म श्रुत्वा सुवर्णालङ्कृता गा भूसुरेभ्यः शतशो ददौ। जातकर्मादीनि विधिवन्निर्वर्त्य कीदृशोऽयं बालो भविष्यतीति पृष्टवति शिवगुरौ

श्रीशङ्करचरित्रमाहात्म्यभविष्यवादः।

"वेदे ज्ञेन समो ज्ञाने भविता शम्भुना समः।
कारुण्ये हरिणा तुल्यो भविष्यति महामनाः॥
निष्कलङ्कां स्वकां कीर्तिं भुवि धास्यति पावनीम्।
असंख्यगुणको बालो भवितेत्यब्रुवन्द्विजाः॥"
(स० शं० सा०)

एतद्विप्रवचनमाकर्ण्य परमया मुदा समन्वितः स भूदेवोत्तमो बभूव।

॥ इति श्रीशङ्करसम्भवो नाम द्वितीयः सर्गः॥ २॥

---

**३ अथ नानासुरावतारनिरूपणम्॥**

देवानामवताराः।

तदा ते ते देवा अपि तत्तन्नाम्ना भुवि जज्ञिरे। **अरुणो विष्णुश्च विमलाचार्योदरात्पद्मपादनाम्ना, पवनः प्रभाकरोदराद्धस्तामलकाख्यया, तोटकाह्वः पवमानदशांशेन, शिलादमुनिपुत्रस्तूदङ्काभिधानेन, ब्रह्मा मण्डनाभिधया, वरुणश्चित्सुकाह्वया जज्ञिरे। मण्डन एव सुरेश्वरो बभूव वाचस्पतिरप्यानन्दगिरिरभूत्। नन्द्यानन्दगिरिरभूदित्यपि केचिद्ब्रुवन्ति।**

श्रीसरस्वत्यै दुर्वाससा दत्तः शापः।

अथैकदा सरस्वत्यृषिमण्डले वेदपठनकाले दुर्वाससं स्खलितस्वरं वीक्ष्य जहास। मनुष्ययोनिं प्रतिपद्यस्वेति दुर्वासास्तां शशाप। पुनः स ऋषिभिरनुनीतो मुनिः शारदामवोचत्। **मानुषे जन्मनि यदा मानवशम्भोर्दर्शनं ते भविष्यति तदा पुनस्त्वममर्त्यत्वं प्राप्स्यसि।** इति मुनिवचनेन महीतले शोणतीरे विष्णुमित्राख्यद्विजवर्यसद्मन्याजन्मसिद्धसकलवेदवेदाङ्गा श्रीसरस्वत्युभयभारत्याख्यया जज्ञे।

मनुष्ययौनौ शारदोत्पत्तिः।

अथैकदा स्वपितुर्गेहे वसन्ती विश्वरूपं नाम ब्राह्मणपुत्रं विद्याविनयसम्पन्नं श्रुत्वा तद्गतचित्तातीव विह्वला जाता। तस्मायेव स्वानुरूपाय पश्चात्स्वपित्रा विवाहे दत्ता।

श्रीशारदाविवाहः।

स एव विश्वरूपो नाम बालकोऽग्रे मण्डनाख्यया विश्रुतः सकलशास्त्रज्ञः स्वपुरीं शोभयामास।

॥ इति शारदाविवाहो नाम तृतीयः सर्गः ॥ ३ ॥

---

## ४ अथ प्रागष्टमवत्सराद्विचित्रं यद्वृत्तं तस्य निरूपणम् ॥

अथ बाल्यमापन्नः श्रीशङ्करः प्रथमे वर्षे देशभाषां साधयामास। द्वितीये वर्णविज्ञानं पुराणश्रवणमकार्षीत्। तृतीये तु दैवयोगतोऽस्य पिता मृत्युमयात्तदाप्यस्य स्वाभाविकी काचित्प्रतिभासीत्। चतुर्थे हायने महेशतः सर्वेज्ञता प्राप्ता। पञ्चमे गुरुणोपनीतः साङ्गतो वेदानधीत्य स्वयमेवार्थतो व्याकरोत्। (षड्दर्शनमूलः, इतिहासस्थाणुर्निगमशाखः, षडङ्गपल्लवः, सूत्रपुष्पो, मन्त्रशलाटुर्ज्ञानपक्कफलः श्रीशङ्करकल्पवृक्ष आसीदित्यानन्दगिरिः।)

श्रीशङ्करबाल्यम्।

श्रीशङ्करपितृमृत्युः सर्वज्ञत्वप्राप्तिरुपनयनं च।

अथैकदा श्रीगुरुर्गुरुगृहे वसन् भैक्ष्यचर्यां चरन् कस्यचिन्निर्धनस्य भूदेवस्य गृहान्प्राविक्षत्। ॐभवती भिक्षां ददात्विति शङ्करवचः श्रुत्वा विप्रवधूरुवाच। भवादृशाय भोजनं दत्वा सुखिनो भविष्यन्तो नरा जगतीतले स्युः। वयं तु केवलं वञ्चिताः खलु विधिना येन त्वादृक्षाय भोजनदानेऽप्यसमर्थाः स्मः। इत्युक्त्वाऽऽमलकमात्रं भिक्षां ददौ। इति विप्रस्त्रीवचनं दीनमाकर्ण्य तेनैवामलकेन सन्तुष्टो दयार्द्रधीः श्रीशङ्कर उवाच। कमले भगवति कमलालये सन्तुष्टा ब्राह्मणस्त्रियोऽस्या गृहे सन्ततं वस। इत्युक्तिमात्रं श्रुत्वा तद्गृहाङ्गणे सपद्येव श्रिया सन्तुष्टया श्रीशङ्करस्य पुरः प्रादुर्भूयोक्तम्। वत्स वरं वृणीष्व।

निर्धनब्राह्मणस्य सम्पत्प्राप्तिः।

लक्ष्मीप्रसादः।

श्रीशङ्करेण प्रत्युक्तम् । यदि प्रसीदसि तर्ह्यस्या ब्राह्मणस्त्रियो गृहं कनकामलकपूर्णं विधेहि । इति शङ्करवचनं श्रुत्वा तया प्रत्यूचे । वत्स नैतैः पूर्वभवे सुकृतं कृतमिति तवापि विदितमेव । कथं तदेते ममापाङ्गपात्रतां प्राप्नुयुः । तदा शङ्करः प्रत्याह । यद्यहं ते दयनीयस्तर्हि तथा त्वया कर्तव्यम् । इति वाचमाकर्ण्य तद्विप्रगृहं कनकामलकैः पूर्णं विधाय तत्रैव स्वां नित्यां वसतिं चकार लौकिकदृष्ट्यात्वन्तर्धानमगात् ।

सुवर्णामलकवृष्टिः ।

अनेन वृत्तान्तेन श्रीशङ्करो लोके कीर्तिमवाप्य वेदमर्मभेत्तेति विश्रुतोऽभूत् । षष्ठेऽब्दे सर्वशास्त्रग्रन्थिभेदनं भासकया शक्त्याकार्षीत् ।

षष्ठेऽब्दे सर्वशास्त्रग्रन्थिभेदनम् ।

॥ इति शुद्धाष्टमहायनप्राक्चरित्रगो नाम
चतुर्थः सर्गः ॥ ४ ॥

## ५ चतुर्थाश्रमग्रहणम् ॥

अथ सप्तमे हायने प्राप्ते श्रीगुरुर्गुरोर्गृहात्प्रतिनिवृत्य मातृसेवासक्तस्तत्सन्निधावेव तस्थौ । एकदास्य माता दूरस्थां नदीं स्नानार्थं गता तपःकृशतनुर्विललम्बे । तदा श्रीशङ्करः शङ्कितचित्तो नदीतीरं गत्वा तत्र गतमोहां तां विगतपङ्कजलार्द्रैः पङ्कजैर्वीजयंस्तां सह जनैर्गृहमानैषीत् । एवमेव प्रत्यहं खरतररविकिरणैः क्लिश्नातीति विचिन्त्य कविहृद्यैः पद्यैः स्वगृहद्वारसमीपागमनार्थं श्रीशङ्करेण स्तुता सा नदी प्रसन्ना परेद्युरेवागता स्वच्छा वहति स्म ।

मातृशुश्रूषा ।

स्वगृहद्वारे नद्या आनयनम् ।

एवंरीत्या लोके प्रसृतविख्यातिं श्रीशङ्करं लोकशङ्करं कर्णपरम्परया श्रुत्वा केरलानां राजा राजशेखरः श्रीगुरुसकाशे बहूपहारान्दत्वा स्वामात्यं मृगाङ्कं प्रैषयत् । स्वनिवेदितं तस्मिन्प्रोक्तवति श्रीशङ्करेण प्रत्युक्तम् । भैक्ष्यमन्नं परि-

राजशेखरदर्शनम् ।

**धानमर्जिनं नैजं कर्म विहाय कुभोगैर्वयं किं कुर्महे** । इतीममेव वृत्तान्तं सोऽमात्यः पुनर्गत्वा स्वस्मै नृपतये न्यवेदयत् । तदाकर्ण्य स राजा स्वयमेवागत्य स्वर्णायुतं तत्पुरतः स्थापयित्वा दण्डवत्प्रणम्योपविश्य परस्परकुशलप्रश्नानन्तरं सादरं स्वकृतनाटकत्रयं वाचितवान् । तेन प्रसन्नः श्रीशङ्करस्तत्पुत्राप्तिकाङ्क्षां पूरितवान् ।

मुनिदर्शनम् ।

अथ केनचित्कालेनोपमन्युदधीचिगौतमागस्त्यप्रमुखान्शंकरं द्रष्टुमागतान्मुनीनालोक्य श्रीशङ्करमाता परमहृष्टचेतसा तान्स्वागतं व्याहृत्य विधिवदासनं प्रकल्प्य मधुपर्कार्घ्यादिना पूजयित्वा सर्वानृषीन्प्रसन्नमुखान्दृष्ट्वा **कियदस्य मे बालकस्यायुरिति** साञ्जलिबन्धंताननुयुयोज । तेष्वृषिष्वगस्त्येनोक्तम् । **शरदो द्विरष्ट नाम षोडशवर्षावध्यायुः । कारणान्तरतः पुनः षोडश वत्सरान् वत्स्यति ते वत्सः** । इत्युक्त्वा सर्वे मुनयः श्रीशङ्करमामन्त्र्य यथागतं साधयामासुः । माता त्वगस्त्यवचनशल्यगतप्रायप्राणा शोकसागरमग्ना रुदती तस्थौ । तामेवंगतां सुतो बोधयामास । मा त्वमम्ब रोदनं कार्षीः । शोके सहायता नास्त्येव । अदर्शनात्सर्वे प्राणिनः समुद्भवन्ति पुनश्चादर्शनतामेवोपयान्ति । "नाहं तेषां ममैते नो व्यासेनोक्तमिदं वचः" ॥ कौ मातापितरौ, के वा सुताः, कस्य वा वयम् । ब्रह्मैव वस्त्वेकं सारमन्यदखिलमसारम् । अतो बन्धमुक्तये तुर्याश्रममेवाश्रित्याहं यतिष्ये । इति सुतवचनं श्रुत्वा द्विगुणितशोका सा प्राह । रे बालक त्यजेमां बुद्धिम् । गृहस्थो भूत्वा ऋतुभिरिष्ट्वाऽन्ते यतिर्भवितासि । सर्वज्ञतां प्राप्य कथं मामसहायां त्यक्तुमुत्सहसे । इत्युक्तवतीं मातरं पुनः पुनरपि व्यासवचनेनैवाबोधयत् । सम्प्राप्ते त्वष्टमेऽब्दे श्रीशङ्करश्चिन्तयामास ।

आयुर्विषयकः प्रश्नः ।

सुतायुरल्पतया मातृशोकः ।

गुरुणा कृतो मातुर्बोधः ।

तुर्याश्रमग्रहणनिश्चयः ।

संन्यासग्रहणार्थं मातुराज्ञाप्राप्तियुक्तिचिन्तनम् ।

**गार्हस्थ्यन्तु नैव मयाङ्गीकर्तव्यम्** । आज्ञां तावज्जननी नैव ददाति । न मातुर्दैवतं परमित्यपि स्मर्यते । अतो नोचितं तदाज्ञोल्लङ्घनम् । जन्म तावन्मदीयं पितुः सकाशाद्वेदान्तसम्प्रदायार्थम् । अतोऽधुना तथाहं करिष्ये यथा स्वयमेव माता सानन्दं संन्यासाय मां समाज्ञापयिष्यति । इति संचिन्त्यान्येद्युः सरितं यात्वा तत्र जलान्तः प्रविष्टो ग्राहग्रहार्तो हाम्ब ग्राहेण धृतोऽस्मि न बहिश्चलितुं पारये । इत्युच्चै रोदितुं प्रारेभे । तं तदवस्थं पुत्रं पश्यन्ती तत्प्रतीकारं त्वपश्यन्ती भृशं विललाप । जलमध्यगतो जनन्याः कष्टमवलोक्याब्रवीत् ।

अम्ब यदि मे जीवितं ते रोचते तर्हि मां संन्यासायाज्ञापय येन ग्राहग्रहमुक्तो भविष्यामि संसारसागरं तरिष्यामि च । इत्युक्ता माता जीवनाशात्संन्यास एव वरमिति मत्वा तत्क्षण एवाज्ञां ददौ । तदा मनसा संन्यासे विहितमात्रे नक्रमुक्तेन सलिलाद्बहिरागतेनोक्तम् ।

मातृरक्षाविचारः ।

अम्ब पैतृकं रिक्थं ये गृह्णन्ति तैस्तवाशनवस्त्रादिभिः पालनं कर्तव्यम् ।

दुःखे वा सुखे वा यदा यदा मां स्मरिष्यसि तदा तदा तव संनिधौ संनद्धोऽस्मीति विद्धि । मामनाथां त्यक्त्वा निर्गतो बालक इति मा चिन्तय । त्वत्संनिधिस्थेन मया यावत्तव पालनं कर्तव्यं **तच्छतगुणितं दूरस्थेन** मया क्रियते । इति शङ्करो मातरं सूक्तिभिः सान्त्वयित्वा स्वबान्धवेभ्योऽप्यचकथत् । संन्यासं जिघृक्षुरहं मातरमिमां भवत्सु क्षिपामि । भोजनाच्छादनादिभिः सर्वथा सा वः परिपालनीयेति । तथैव तेऽपि श्रीशङ्करस्याज्ञां स्वीचक्रुः । पुनः श्रीशङ्करो मातरं मा दुःखं कार्षीर्दुःखे नास्ति सहायतेति संबोध्य तदाज्ञां लब्ध्वा दूरतो गन्तुं मनो विदधे ।

आचार्यनिर्गमनम् ।

गच्छन्तं तत्र नदीतीरे देवालयस्थितो भगवान् कृष्णोऽशरीरिण्या वाचाऽवोचत् । **तरङ्गैर्नदी मां ताडयति नेह वस्तुं क्षमे** । त्वं तावद्विनिर्गतोऽसि । इति कृष्णवाणी-

माकर्ण्य शनैस्तां मूर्तिं भुजाभ्यां प्रोद्धृत्य यत्र नैव बाधा काप्यभवत्तत्र निकट एव स्थापयित्वा चिरायात्र सुखमास्स्वेत्युक्त्वा प्रतस्थे। वनमध्याच्चरन्नर्मदातटस्थं गोविन्दपूज्यपादाश्रममुद्दिश्य प्रातिष्ठत। केनचिन्मुनिना दर्शिता प्रादेशमात्रविवरा तदीया गुहा। तत्र दूरतो यतीशं दृष्ट्वा प्रणम्य पुष्कलाभिः स्तुतिभिः शेषात्मकतया तदवतारभूतपतञ्जल्यात्मना चास्तौत्। तत्कृतां स्तुतिं शृण्वाना गोविन्दपूज्यपादाः प्रोचुः कस्त्वमिति। तदा श्रीशङ्करेण कथितम्। "मनोबुद्ध्यहङ्कारचित्तानि नाहं न श्रोत्रं न जिह्वा न च घ्राणनेत्रम्। न च व्योम भूमिर्न तेजो न वायुश्चिदानन्दरूपः शिवोऽहं शिवोऽहम्॥" इति।

श्रीगोविन्दयतिदर्शनम्।

ततस्तं महेश्वरं शङ्करतां गतं ज्ञात्वा गुहाया द्वारे पुरस्कृतौ स्वौ चरणौ पूजितवतेऽङ्गीकृतस्वशिष्यत्वाय तत्त्वमसीत्यादिश्रुतिवाक्यैरद्वैतं ब्रह्म शाश्वतमुपादिशन्। श्रीमद्व्यासेन स्वपुत्राय शुकायोक्तं श्रीगौडपादैर्गृहीतं ततो गोविन्दयतिभिस्ततः श्रीशङ्कराचार्यैरित्यादितः प्रभृति शिष्यपरम्परा।

शिष्यपरम्परा।

अथैकदा श्रीशङ्करः श्रीमद्गोविन्दयतिगुरून्ध्यानमग्नान्दृष्ट्वा नर्मदानदीसलिलपूरघोरशब्दं समाधिविघ्नं निध्यायंस्तत्सलिलं कमण्डलूदकेन सम्प्रोक्ष्य सर्वं तन्नदीसलिलं स्वकमण्डलुमध्य एव संन्यवेशयत्। वृत्तान्तमिमं लोकमुखादाकर्ण्य श्रीगोविन्दयतयः परमहृष्टाः शङ्करं प्रोचुः। "शारदाकाशवत्तत्त्वं भातं ते स्वधियानया"।

नदीसलिलस्य कुम्भे संनिवेशनम्।

गोविन्दयतिप्रसादः।

अधुना श्रीमतीं रम्यां काशीं गत्वा तत्र तत्त्वज्ञानं मुमुक्षुभ्यो बोधयन्नेव तिष्ठेति। अत्रैव पुरा वृत्तमितिहासमुदाहरन्तः श्रीगोविन्दयतयः प्रोचुः।

पुराव्यासेन कथिता कथा।

पुरा हिमाचले मुनिसंसदि श्रीमद्व्यासो वेदान्तं शशंस। तदा मया पृष्टम्। भगवंस्त्वया सर्वे वेदा विभक्ताः। भारतं कृतम्। ब्रह्ममीमांसा निर्मिता योगभाष्यं रचितम्। केचित्तत्र विवादेनार्थमन्यथा कल्पयन्ति। तद्भेद-

निर्णायकं भाष्यं भवता स्वयं कर्तव्यम् । इति वचनमाकर्ण्य श्रीमद्वैपायनः प्रत्यभाषत । इममेवार्थं पुरा दैवतैः पृष्टो भगवान्भवः । तेनापि स्वावतारः प्रतिश्रुतः । तत्तव शिष्यः कृती भविता । यः सकलं नद्यम्भः कुम्भे संहरिष्यति स एव स्वयं वेदान्तार्थप्रकाशकं भाष्यं करिष्यतीति व्यासवचनम् । भिक्षो तदद्य मया प्रत्यक्षीकृतम् । तत्त्वं तत्त्वज्ञानबोधनेन जगदुद्धरणार्थं काशीं पुरमधिवस । तत्र काशीनाथो विश्वनाथः स्वयं ते दर्शनं प्रदास्यति । इति गोविन्दयतयः कथयामासुः । गुरोरनुज्ञया श्रीशङ्करो हि

श्रीगोविन्दयतेः सकाशादाचार्याणां काशीं प्रतिगमनायाज्ञा ।

काशीं गत्वा "शिवाकारां देवीं हरिहरनिजावासधरणीम्" (स. शं. सा.) इत्यनेन तां पुरीं स्तुतवान् ।

काशीं प्रति गमनं काशीस्तोत्रं च ।

भागीरथीस्तवः ।

ततः श्रीमतीं भागीरथीं प्राप्य

"ॐ शिवा शान्ता शीता हरिपदयशोभूतिरतुला" इत्यनेन स्तुत्वा
(स. शं. सा.)

विश्वेश्वरालयं गत्वा तं नत्वा मनसा स्वात्मरूपिणमभ्यर्च्य

विश्वेश्वरस्तुतिः ।

"ॐ शिवं शान्ताकारं भवमृतिजराशून्यममृतम्"।
(स. शं. सा.)

इत्यनेनास्तवीत् ।

अन्नपूर्णास्तोत्रम् ।

ततोऽन्नपूर्णां यात्वा

"शिवां शङ्करस्यार्द्धदेहां विशुद्धाम्" इत्यनेन तां प्रसादयामास । एवं शिवं सपरिवारमभ्यर्च्य मोक्षदे काशीक्षेत्रे यतिस्तस्थौ ।

निरवधिसुखदेन स्वात्मभावं गतेन
प्रथितसुजनकीर्तिः शङ्करो दैशिकेन ।
श्रुतिशिखरविचारे प्रेरितोऽसौ हि काशीं
यतिवरगुणयुक्तः प्राप्य तस्थौ यतीशः ॥

॥ इति गुरुसङ्गमकाशीप्रवेशो नाम पञ्चमः सर्गः ॥ ५ ॥

## ६ अध्यात्मविद्याप्रतिष्ठितिः ॥

अथैकदा कश्चिच्चोलदेशजः संसाराङ्गारतप्तो विषयाशीविषदष्टचेता निर्विण्णमानसः श्रीमच्छङ्कराचार्यानेकान्ते समुपगम्य प्राणंसीत् । स्ववृत्तान्तं निवेदितवन्तं तमाचार्याः शिष्यत्वेनाङ्गीचक्रुः । स एव सनन्दनः पद्मपादाख्ययाग्र्यशिष्योऽभूद्भगवतामाचार्याणाम् । येऽप्यन्ये चित्सुखानन्दगिर्यादयो देवतांशा अमुं श्रीशङ्करं सेवितुं यातास्तेऽपि सनन्दनवत्प्रायो विरक्तास्तस्मिन्नविमुक्तक्षेत्र एव वटतलस्थमहादेवशिष्या अपि लोकरीत्या स्पष्टं शङ्कराचार्यशिष्या इति प्रसिद्धिं प्राप्तुमस्य यतीन्द्रस्य शिष्यत्वमापुः । एवमेवाचार्यास्तत्र संसारसागरमग्नाञ्जनान्दृष्ट्वा ह्यद्वैतब्रह्मोपदेशेनोदधीधरन् । कथं श्रीकाशीक्षेत्रे श्रीमद्भिराचार्यैः शिष्यगणायोपदेशश्चक्रे । तत्कथ्यते ।

सनन्दनशिष्यः ।

**चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा ।**
**गुरोस्तु मौनं व्याख्यानं शिष्यास्तु च्छिन्नसंशयाः ॥**

एकदा स्नानार्थं गङ्गां गच्छन्तः पथि चाण्डालमेकं श्वभिश्चतुर्भिः संयुतमवलोक्याहुस्त्यज पन्थानं मा नः स्प्राक्षीः । इत्युक्तवन्तं यतिं वीक्ष्य स चाण्डालः प्रहसन्प्रत्यभाषत । भो दण्डिन्वचस्ते वेदान्तसिद्धं न्याययुक्तं च । धीरुदारा । असङ्गं सत्सुखम् । भेदभावस्तावदियानित्येतच्चित्रमेव भाति । बहवस्त्वादृशा दण्डिनो धृतकुण्डा वेषमात्रेण संन्यासिनो ज्ञानशून्या जनान्बहुधा वञ्चयन्त्येव । त्यज मार्गमिति कमुद्दिश्य भवान्वक्ति देहं वा देहिनं वा । तदुभयथापि न घटते । अन्नमयादन्नमयं भिन्नम् । कथं तर्हि तव प्रत्यगात्मनि ब्राह्मणान्त्यजयोर्भेदः । सुरनदीसुरादिषु प्रतिबिम्बिते सवितरि को विशेषः । कस्तत्ते मिथ्याग्रहो यदयं चाण्डालोऽहं द्विज इति । शरीरेष्वशरीरं सन्तं पुराणमेकं विस्मृत्य किमिति ते मिथ्यैव कलेवरेऽहंता । केयं पुण्यभूमिः काशी क तेयं ज्ञानशून्योऽनर्थकारी यतिवेषः । अहो सा माया यया महान्तोऽपि मुह्यन्ति । इत्यनर्गलं यथेच्छं तत्कृतस्वदूषणं निश-

चाण्डालदर्शनम् ।

म्याविक्षुब्धचित्ताः श्रीमदाचार्याः प्रोचुः । यत्त्वयोक्तं तत्सत्यम् । शास्त्रविशारदा बहवः पण्डिताः सन्ति । किन्तु तत्त्वविदो विरला एव ।

मनीषापञ्चकम् ।

इत्युक्त्वा तदैव श्रीमदाचार्यैर्मनीषापञ्चकस्तोत्रं विरचितम् । तत्रैव चाण्डालस्थाने वेदचतुष्टययुक्तः श्रीमद्भगवान्विश्वेश्वरोऽवलोकितः । तदातीवभक्तिभावादाचार्यैः स्तुतः प्रसन्नो भूत्वोवाच ।

अन्यथा वेदवाक्यानि व्याख्यातानि कुबुद्धिभिः ।
न सर्वज्ञं विना तेषां सूत्राणां सम्प्रकाशकः ॥
अतस्त्वं सर्वशक्तित्वात्सर्वज्ञत्वाच्च भो मुने ।
यथा श्रुतीनां सर्वासां परब्रह्मणि निष्ठता ।
तथाऽद्वैतपरं भाष्यं कुरुष्वाभिनिवेशतः ॥
श्रुतिसूत्रेतिहासानां व्याख्या निर्माय यत्नतः ।
सम्प्रदायविदां मार्गः प्रकाश्यस्तेऽधुना यते ॥
.... .... .... .... .... ....
त्वया कृतानि भाष्याणि प्रचरिष्यन्ति सर्वतः ।
पद्मयोनिसभामध्ये यास्यन्ति परिनिष्ठताम् ॥

(स० शं० सा०)

तथैव कर्मठं मण्डनं, प्रभाकरं, नीलकण्ठं शैवं, गुप्ताख्यं शाक्तिकं, वेदतस्करं भास्करं चैवमादीञ्जित्वा ताञ्छिष्यान् कृत्वा मतमद्वैतं प्रख्यापय । इति श्रीशङ्करं शङ्करः समादिश्यान्तरदधात् । तत आचार्या जाह्नवीं गत्वाद्भिः स्पृष्ट्वा हृदिस्थितमीशं ध्यायन्तो वेदान्तार्थान्विचारयामासुः ।

पण्डितपराजयायाज्ञा ।

एवं श्रीमदाचार्या द्वादशे वर्षे

ईशकेनकठप्रश्नमुण्डमाण्डुक्यमेव च ।
ऐतरेयं तैत्तिरीयं छान्दोग्यं बृहदारणम् ॥ इति दशोपनिषदां भाष्याणि विरच्य शिष्यानध्यापयामासुः । मुख्यः शिष्यः सनन्दनोऽभूत् ।

आचार्यग्रन्थाः ।

| | |
|---|---|
| गीताभाष्यम् । | आत्मनिन्दाष्टकस्तोत्रम् । |
| विष्णुसहस्रभाष्यम् । | नवरत्नमालिकास्तोत्रम् । |
| सनत्सुजातीयभाष्यम् । | महावाक्यस्तोत्रम् । |
| नृसिंहतापिनीव्याख्यानम् | आर्तत्राणगङ्गाधराष्टकस्तोत्रम् । |
| उपदेशसहस्रम् । | शिवपञ्चाक्षरपञ्चकस्तोत्रम् । |
| प्रबोधसुधाकरः । | ब्रह्मनामावलिस्तोत्रम् । |
| वेदान्तसारः । | सदाचारस्तोत्रम् । |
| स्वात्मानन्दप्रकाशः । | स्वरूपानुसन्धानस्तोत्रम् । |
| आत्मानन्दलहरी । | यतिपञ्चकस्तोत्रम् । |
| शिवानन्दलहरी । | जीवब्रह्मैकत्वस्तोत्रम् । |
| सौन्दर्यलहरी । | द्वादशपञ्जरिकास्तोत्रम् । |
| वज्रसूचिकोपनिषत् । | अच्युताष्टकम् । |
| वेदान्तपरिभाषा । | दक्षिणामूर्त्यष्टकम् । |
| आत्मानात्मविवेकः । | शिवमानसपूजाष्टकम् । |
| अपरोक्षानुभूतिः । | मानसपूजाप्रकाराष्टकम् । |
| शतश्लोकी । | गुरोरष्टकम् । |
| शारीरकभाष्यम् । | कालभैरवाष्टकम् । |
| इत्यादयः । | विश्वनाथनगर्यष्टकम् । |
| ( स्तोत्राणि ) | शिवाष्टकम् । |
| श्रीपादादिकेशस्तोत्रम् । | पाण्डुरङ्गाष्टकम् । |
| श्रीलक्ष्मीनृसिंहस्तोत्रम् । | निर्वाणषट्कम् । |
| चर्पटपञ्जरिकास्तोत्रम् । | भजनम् । |
| दशावतारस्तोत्रम् । | सोपानपञ्चकम् । |
| गोविन्दाष्टकस्तोत्रम् । | प्रश्नोत्तरमाला । |
| पञ्चमहायुधस्तोत्रम् । | मनीषापञ्चकम् । |
| परदेवतामानसपूजास्तोत्रम् । | उपदेशपञ्चकम् । |

इत्यादयः शतशो ग्रन्था विद्यन्ते ।

सनन्दनस्य पद्मपादाख्या।

एकदा **सनन्दनो** जाह्नव्याः पारे तीरे बभूव। तदाऽऽचार्यास्तमाह्वयन्। गुरुभक्तिः संसारसागरादेव जनांस्तारयति किमुतास्या नद्या इति विचिन्त्य श्रीगुरुचरणौ ध्यात्वा **पद्मपादः** प्रवाहं प्राविक्षत्। तस्य पादसंरक्षणे भगवती जह्नुकन्या पदे पदे पद्मान्यञ्चयामास। **तेषु पद्मेषु पदे विनिवेश्य** श्रीगुरुसन्निधौ ययौ। ततस्तं परमया प्रीत्याश्लिष्य श्रीगुरुस्तस्मै **पद्मपादाख्यां** ददौ।

कुतार्किपण्डितपराजयः।

अथैकदा कुतर्किणः पण्डिता अद्वैतपरं वेदार्थमाचिक्षिपुः। तेषां मतानि युक्तिकुठारेण च्छित्वा सर्वांस्ताम् भगवाञ्शङ्करोऽशेषतया पराजितवान्। तदा ते स्वमतं विहायाचार्यशिष्यत्वमङ्गीचक्रुः।

भाष्यकृतिः।

तत आचार्यो भगवता महेशेन प्रेरिताः **शारीरकभाष्यं** समन्वयाविरोधसाधनफलचतुर्लक्षणसंयुतं महाप्रसादात्मकं ग्रन्थं व्यररचन्।

विमलपदविशिष्टं स्वच्छगम्भीरभावम्
श्रुतिशिखरगिरां यन्निर्णयाधारमद्धा।
यतिवरकृतमीड्यं भाष्यमद्वैतनिष्ठम्
जयति कलिमलघ्नं मोक्षदं सन्मतं तत्॥

**॥ इति श्रीशारीरकभाष्यप्रमेयकथनं नाम षष्ठः सर्गः ॥ ६ ॥**

---

## ७ अथ श्रीव्यासशङ्करयोः संदर्शः॥

सकलमतनिर्बर्हणानन्तरं मणिकर्णिकातीरे निदिध्यासलालसस्य श्रीशङ्करस्य वृद्धब्राह्मणरूपेण व्यासदर्शनमित्यानन्दगिरिः। विवादकाले वृथाजल्पं कृतवतो वृद्धब्राह्मणरूपस्य व्यासस्य श्रीशङ्करेण कपोलताडनमपि कृतमित्यप्यानन्दगिरिर्भणति।

श्रीमद्व्यासागमनम् ।

अथैकदा स्वकृतं भाष्यं शिष्यानध्यापयतां श्रीगुरूणां संनिधौ कश्चिद्वृद्धो ब्राह्मणः समुपेत्याह । व्यासप्रणीतसूत्रभाष्यं त्वया कृतमिति श्रूयते । यदि तत्सूत्राणि तत्त्वतो वेत्सि तर्हि तृतीयाध्यायप्रारम्भगतं **"तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यां"**इत्यस्य सूत्रस्यार्थं ब्रूहि । इति विहिते प्रश्ने यथाज्ञातमर्थं श्रीशङ्करेण कथितं पुनः स ब्राह्मणः शतधा विकल्पयामास । तत्त्वाचार्याः सहस्रधा चखण्डुः । **एवमाचार्यद्विजयोर्दिनाष्टकं वाक्कलहो** विजजृम्भे । अनेन प्रकारेण विवदमानौ पार्श्वस्थः पद्मपादोऽवलोक्य प्राह । भो भो गुरवो नायं द्विजो यो द्विजरूपधरो दृश्यते । **किन्तु भगवान्सूत्रकारो व्यासः । भवांस्तावच्छ्रीशङ्करो "व्यासस्तु नारायण एव साक्षात्"** । एवं श्रीशङ्करनारायणयोः कलहे विजृम्भमाणे किं वयं विघ्नः किं वा वयं कुर्महे । इति पद्मपादवचनमाकर्ण्य विस्मयाकुलमानसाः श्रीमदाचार्याः श्रीमद्वैपायनं प्रणम्य श्लोकैर्नवभिस्तुष्टुवुः । तत्राहुः । **यदि तवाद्वैतार्थोऽभिमतस्तर्हि स्वीयेनैव रूपेण मम पुरतः सद्यः प्रादुर्भवेति** । तत्क्षण एव श्रीमद्व्यासः प्रकटीभूयोक्तवान् । सुतरामहं तुष्टोऽस्मि यते त्वदीयेनागाधेन ज्ञानेन । अखण्डं त्वदीयं पाण्डित्यम् । महेश्वरस्य सभाङ्कणेसिद्धमुखात्त्वया भाष्यं कृतमिति श्रुत्वा त्वां दिदृक्षुरत्रागमम् । इदं व्यासवचनमाकर्ण्य भगवांश्छङ्करयतिर्हर्षकण्टकिततनुर्बभूव । श्रीशङ्कररचितभाष्यं सम्पूर्णतयावलोक्याभिनन्द्य व्यासः प्रावोचत् । न त्वं प्राकृतः पुरुषः किन्त्वसाधारण एव । मयेदं साहसं कृतमिति यत्त्वं वदसि तन्नेदं साहसम् । गूढभावानि मत्कृतसूत्राणि यथार्थतो जानन्तं विना त्वां नान्यमिहालोकये । श्रीशङ्करेणोक्तम् । निगमान्तभाष्याणि मया रचितानि पाठितानि च । पुनश्च कुमतानि सम्यङ्नाशितानि। तस्मादतः परं किञ्चिदपि कर्तव्यं नोर्वरितम् । **अतो यावदिदं शरीरं विसृजेयं तावन्मणिकर्णिकायां तव सान्निध्यं विधेहीति** । अस्मिन्काले षोडशवर्षवयोऽवध्यायुःसमाप्तिकालः प्राप्त आसीत् । इति शङ्करवच-

आचार्यायुर्वृद्धिः ।

नमाकर्ण्य भगवता व्यासेनोक्तम् । मैवं कार्षीः । मह्यां केचिदन्येप्युदारविद्याः पण्डिताः सन्ति । नाद्यापि ते त्वया निर्जिताः । तत्पराजयार्थं कतिचिद्धायनानि त्वयेह वसतिः कार्या । नोचेद्भुवि नृणां मुमुक्षैव दुर्लभा स्यात् । पुनर्व्यासेनोक्तम् ।

अष्टौ वयांसि विधिना तव वत्स दत्ता-
न्यन्यानि चाष्ट भवता सुधियार्जितानि ।
भूयोऽपि षोडश भवन्तु भवाज्ञया ते
भूयाच्च भाष्यमिदमारविचन्द्रतारम् ॥ (माधवः.)

ननु षोडशवर्षपरिमितेनाधिकेनायुषा किं मया कर्तव्यमिति चेच्छृणु ।

आचार्याणां कर्तव्यता ।

अन्यानद्वैतविद्यापरिपन्थिनः स्ववाक्यैस्त्यक्तभेदमतीन्विधत्स्व । ( श्रीमद्व्यासवचनेन कमलजः सम्प्राप्य शङ्करस्यायुषः षोडशवर्षावधिं वर्धयामास व्यासोऽपि तमुदकेन प्रोक्षयामासेत्यानन्दगिरिः ) । श्रीशङ्करयतिना प्रत्युक्तम् । यद्यपि मदीयं भाष्यं स्वतः प्रचारयोग्यं न भवति तथापि भगवंस्तव सूत्रसम्बन्धवशादपि तावत्प्रचारं प्रयातु । इति नयोक्तिः । इत्युक्त्वा वन्दमाने श्रीगुरौ शङ्करे भगवान्द्वैपायनस्तत्रैवान्तरधात् । ततो भगवत्सूत्रकारविरहदुःखासहिष्णुः कथमपि तत्सहित्वा तदाज्ञानुरोधेन श्रीशङ्करमुनिर्दिग्विजये मनो विदधे ।

भट्टपादाञ्जेतुं प्रयागं प्रत्यागमनम् ।

ततः प्रथमं साधितकर्मकाण्डं **कुमारिलभट्टं** जित्वा तेन **भाष्यवार्तिकं** कारयितुमगस्त्यचरितां दिशं प्रति विन्ध्याद्रिमुद्दिश्य प्रस्थाय श्रीशङ्करयतिवरः **प्रयागमागात्** । तत्र त्रिवेणीसङ्गमे सस्नौ । कुमारिलभट्टकीर्तिं लोकमुखादेवाकर्ण्य तं द्रष्टुकामोऽरण्ये स्वकृतदोषपरिहारार्थं तुषानलं प्रविष्टवन्तं श्रुत्वा तत्रैव गत्वा यतीन्द्रस्तमवालोकयत् । तदा धूमायमानेन

भट्टपाददर्शनम् ।

तुषानलेनाशेषे वपुषि दह्यमानेऽपि स यतीशं दृष्ट्वा स्वशिष्यैस्तत्सपर्यां कारयामास । अनपेक्षितामपि

तां पूजां स यतिर्जग्राह । स्वकमण्डलूदकेन स्वचिताग्निं शिशमयिषुं कृपाकटाक्षैः स्वशरीरं च पूर्ववच्चिकीर्षुं श्रीगुरुं निरुध्य भट्टपादाः प्राहुः । भो यते भवता भाष्यं कृतमिति मया श्रुतम् । तद्वार्तिकमपि व्यधित्सम् । परं न मे भागधेयम् किं तेनाधुनोक्तेन । मया तु दोषद्वयं कृतम् । **सुगतादधीत्य तस्य कुलमेवादौ प्राघातयमेवमेको गुरुहत्यादोषः । अपरस्तु जैमिनिमताभिनिविष्टचित्तः केवलकर्मकाण्डविहिताचारैरेव मुक्तिरित्यवलम्ब्य परमेश्वरं निरास्थम्** । अस्योदाहृतस्य दोषद्वयस्य यथोक्तां निष्कृतिं चिकीर्षुस्तुषानलं प्राविक्षम् । अस्य देहान्त एव प्रायश्चित्तम् । शाबरभाष्यवच्छाङ्करभाष्यकरणाद्यशोऽधिगत्यां न मे सुकृतिर्विलसति । अस्तु मच्छिष्ये ( मण्डनो भट्टपादस्यावुत्त इत्यानन्दगिरिः ) कर्मठे मण्डने जिते सर्वमेव त्वया जितं स्यादिति भट्टपादवचनं निशम्य तस्मायद्वैतं ब्रह्मोपदिश्य बहिरन्तश्च तं तमोविहीनं विधायाभ्रमार्गोन्माण्डनगृहपथेन प्रतस्थे यतिपतिः ।

**॥ इति व्याससंदर्शनो नाम सप्तमः सर्गः ॥ ७ ॥**

## ८ शङ्करमण्डनसंवादः ॥

अथ श्रीशङ्करो मण्डनपण्डितमण्डितां **माहिष्मतीं** नगरीं प्रेक्ष्य तन्नगरोपकण्ठस्थे रमणीये वनेऽवतीर्य रेवायां कृतस्नानः सीतसीकरार्द्रमरुत्सेवितो यतिगुरुर्निर्वर्तितस्वाह्निकक्रियः क्व मण्डनपण्डितगेहमिति जनान्पृच्छञ्जगाम । ततो मण्डनगृहदासीभिरुक्तम् ।

मण्डनपराजयाय माहिष्मतीं प्रत्यागमनम् ।

स्वतः प्रमाणं परतः प्रमाणं कीराङ्गना यत्र गिरं गिरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥

मण्डनगृहचिह्नानि ।

( माधवः. )

वेदाः स्वतः प्रमाणमथवा तत्प्रामाण्यसिद्धेरन्यत्किञ्चित्प्रमाणमस्तीति यद्गृहद्वारे शुकाङ्गना विवदमानास्तिष्ठन्ति तदेव मण्डनगृहमित्युत्तरत्रापि योज्यम् ।

फलप्रदं कर्म फलप्रदोऽजः कीराङ्गना यत्र गिरा गिरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥
( माधवः. )

कर्मैव फलं प्रदास्यत्यथवाऽजः परमात्मा फलं प्रदास्यतीति शुकाङ्गना वदन्ति ।

जगद्ध्रुवं स्याज्जगदध्रुवं स्यात्कीराङ्गना यत्र गिरा गिरन्ति ।
द्वारस्थनीडान्तरसंनिरुद्धा जानीहि तन्मण्डनपण्डितौकः ॥
( माधवः. )

जगत्सत्यं वा मिथ्येति विवदमानाः शुकाङ्गना द्वारि तिष्ठन्ति । इति दासीभिः कथितचिह्नान्येवावलोकयन्नाच्छन्नगृहं तल्लब्ध्वा निरुद्धद्वारं वीक्ष्य योगशक्त्या व्योमाध्वनान्तरवातरत् । तत्र विद्याविद्युत्प्रभाच्छटाप्रदीप्तदेहं कविं मण्डनं **सजैमिनिं श्रीमद्व्यासं** तपोमाहात्म्येनैव श्राद्धविधौ यथाविधि निमन्त्र्य तयोः पादकमलान्यवनेजयन्तं ददर्श । अस्थाने ह्यायातं संन्यासिनमवलोक्य भृशं कुपितस्य मण्डनस्य श्रीशङ्करस्य च वक्रोक्तिगर्भाणि प्रश्नोत्तराणि बभूवुः ।

अत्रानन्दगिरिणा कथ्यते । विश्वेदेवस्थानीयतत्समब्राह्मणाभावाल्लक्ष्मी**नारायणरूपं शालग्रामं** निमन्त्रयामास मण्डनः । तदानीं विश्वेदेवान्सङ्कल्प्य शालग्राम स्वागतमिति दर्भाक्षतप्रोक्षणकाले **शङ्करयतिपादद्वयं मण्डलस्थं** दृष्ट्वा सर्वाङ्गानि वीक्ष्य क्षणेन किलायं संन्यासीति ज्ञात्वा कोपकोलाहलचित्तः कुतो मुण्डीत्यवादीदिति ।

आचार्यमण्डनयोः प्रश्नोत्तराणि ।

कुतो मुण्ड्यागलान्मुण्डी पन्थास्ते पृच्छ्यते मया ।
किमाह पन्थास्त्वन्माता मुण्डेत्याह तथैव हि ॥
( माधवः. )

**प्रश्नः**—कुतो मुण्डी । गृहद्वाराणां कवाटैः पिहितत्वान्मुण्डी श्राद्धकर्मणि द्रष्टुमयोग्यो भवान्केन मार्गेण प्रविष्टः । एवं मण्डनोक्तिं श्रुत्वा किंपर्यन्तं भवान्मुण्डीत्यर्थं प्रकल्प्याह भगवान् । आगलाद्गलपर्यन्तम् । एतेन मत्प्रश्नो न सम्यग्बुद्ध इत्यवगत्य मण्डनः पुनराह । पन्थास्ते पृच्छ्यते

मया । तव मार्गो मया पृच्छ्यते न तु किंपर्यन्तं भवान्मुण्डीति । एवमुक्तस्तद्वचनस्य तव पन्थानं प्रति मया प्रश्नः कृत इत्यर्थं प्रकल्प्य भगवानाह । पन्थास्त्वया पृष्टः पन्थास्त्वां किमाह किमुत्तरं दत्तवान् । एवं पुनर्विपरीतं श्रुत्वा प्रकुपितो मण्डनः प्राह । त्वन्माता मुण्डेत्याह । एवमाकृष्टो भगवानाह । **सत्यमुक्तं तेन** । पन्थानं प्रति त्वमपृच्छः । त्वां प्रष्टारं प्रत्येव त्वन्माता मुण्डेत्याह । तत्तथैव । त्वच्छब्दो मामपृच्छकं नैव ब्रूयात् । अतोऽयं तदुक्तस्त्वच्छब्दो मद्वाचको नैव भवति । एवमेव वक्रोक्तिगर्भाण्युत्तरोत्तराणि प्रश्नोत्तराणि जातानि । तद्यथा ।

अहो पीता किमु सुरा नैव श्वेता यतः स्मर ।
किं त्वं जानासि तद्वर्णमहं वर्णं भवान् रसम् ॥
(माधवः.)

वर्णमात्रमहं जानाम्यतो नैव प्रत्यवायः । भवांस्तावद्रसमपि जानात्यतो निषेधः ।

मत्तो जातः कलंजाशी विपरीतानि भाषते ।
सत्यं ब्रवीति पितृवत्त्वत्तो जातः कलंजभुक् ॥
(माधवः.)

कलंजं नाम विषलिप्तेन बाणेन हतस्य मृगस्य मांसम् । कलंजाशी अभक्ष्यभक्षणशीलः । मत्तः मत्सकाशादुन्मत्तश्च । त्वत्तो जातः कलंजाशी पुत्रस्त्वद्वद्विपरीतानि भाषत इतीदं युक्तमेव ।

**मण्डनप्रश्नः—** कंथां वहसि दुर्बुद्धे गर्दभेनापि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां कस्ते भारो भविष्यति ॥

**शङ्करेण प्रत्युक्तम्—** कन्थां वहामि दुर्बुद्धे तव पित्रापि दुर्वहाम् ।
शिखायज्ञोपवीताभ्यां श्रुतेर्भारो भविष्यति ॥
(माधवः.)

आनन्दगिरिकृतशङ्करविजयेऽप्येतौ श्लोकौ विद्येते । परं तत्र पराजयानन्तरं भिक्षार्थमाकारणसमय उक्तौ ।

मं०—उदूढभार्यापरिरक्षणाक्षमस्य शिष्यपुस्तकभारेच्छोर्ब्रह्मनिष्ठता स्पष्टैव ।

शं०—गुरुशुश्रूषासमर्थस्य स्त्रीशुश्रूषणपरस्य कर्मनिष्ठता तव व्यक्ता ।

मं०—योषिद्गर्भे वसंस्ताभी रक्षितः कृतघ्न कथं ता एव निन्दसि ।

शं०—यासां स्तन्यं त्वया पीतं ताभिः संगतिं कुर्वन् मूर्ख स्त्रीषु तासु कथं पशुवद्रमसे ।

मं०—दक्षिणादीनम्रीनुद्वास्य वीरहत्यामिन्द्रादिहत्यां प्राप्तोऽसि ।

शं०—परब्रह्मवस्त्वजानन्तं त्वामात्महत्या श्रयति ।

मं०—दौवारिकान्वञ्चयित्वा कथं स्तेनवदन्तः प्रविष्टस्त्वम् ।

शं०—भिक्षुभ्योऽन्नमदत्वा कथं चौरवदेकाकी भुङ्क्षे ।

मं०—अस्मिन्कर्मकाले त्वया मूर्खेण सह संभाषणं नैव कर्तुमहमर्हामि ।

"कर्मकाले न संभाष्य अहं मूर्खेण सम्प्रति" ॥

संभाष्यो भाषणयोग्यो नाहं भवामि ।

शं०—न संभाष्य अहमिति विसंधिना भाषणकर्त्रा पाण्डित्यं प्रकटितम् ।

मं०— "यतिभङ्गे प्रवृत्तस्य यतिभङ्गो न दोषभाक्" ॥

शं०—यतिभङ्ग इत्यत्र पञ्चमीतत्पुरुषः । यतेः सकाशात्पराजय इत्यवगन्तव्यम् ।

मं०— "क ब्रह्म, क त्वं दुर्मेधाः, कायं वेषः, क वा कलिः" ।
मिष्टान्नभोजनायैवायं त्वया वेषो विहितः ।

शं०— "क स्वर्गः, क दुराचारः, काग्निहोत्रं, क वा कलिः" ।
स्त्रीणामुपभोगायैव कर्मिणोऽयं वेषो विधृतः ।

व्यासोपदेशः ।

तदा भगवान्व्यासो मण्डनमुवाच । यदस्य यतेस्त्वया दुर्वचनमुक्तं तदनुचितं कृतम् । विष्णुरेव समागत इति तं निमन्त्रयस्व । अथ व्यासाज्ञया तं यतिं शास्त्रवदर्चयित्वा भिक्षार्थे न्यमन्त्रयत । श्रीशङ्करेणोक्तम्—विवादभिक्षामिच्छामि । एकतरस्य पराजये हीतरस्य शिष्यत्वपणा प्रदेया । प्राकृतेऽसि-

न्मैक्ष्ये नैव मदीयादरः । वेदान्तमतमहं सर्वत्र प्रकटीकुर्वे । **तं मे सिद्धान्तमुत्तमत्वेनाङ्गीकुरु, विवादं वा कुरु, जितोऽस्मीत्येवं वा वद ।** इति तद्वचनं श्रुत्वा प्राप्तविस्मयो मण्डन उवाच । वेदाभिप्रेतं कर्ममार्गं विहाय मुनिकल्पितं मार्गमन्यं न स्वीकरिष्ये । **सहस्रफणशेषवचनेनापि नाहं जितोऽस्मीति वदेयम्** । धन्योऽस्मि । सुदिनमेवाद्य यज्जयमहोत्सवकालः स्वयमेव सम्प्राप्तः । भवत्वावयोर्विवादः । पुष्कलशास्त्रपरिशीलनं मेऽद्य फलतु । परेद्युरावयोर्वादो भविष्यति । अद्य तु माध्याह्निकं कर्म कुर्याम् । तत्र व्यासजैमिनिभ्यामुक्तम् । **मण्डनस्य भार्यैव सदस्या कर्तव्या ।** एवमुक्तो मण्डनस्तांस्त्रीन्मुनीन्विधिवदभ्यर्चयामास । भुक्तोपविष्टं मुनित्रयं मण्डनमामन्त्र्य गतम् । मुनिद्वयं तु तरसाऽन्तर्धिं ययौ । तृतीयस्तु रेवातटे कदम्बसाले देवालये स्थितवान् । परेद्युः प्रातर्नित्यकर्मविधिं समाप्य माण्डनं गृहमागत्य श्रीशङ्करो वादायोपविष्टः । मण्डनभार्यामुभयभारतीं शारदां सदस्यां कृतवान् ।

वादनिश्चयः ।

वादप्रारम्भे प्रतिज्ञा ।

आदौ श्रीशङ्करेण स्वकीया प्रतिज्ञा विहिता । **ब्रह्मैवैकं सद्वस्तु जगन्मिथ्या । यद्येतद्विषयप्रतिपादने तव सकाशात्पराजयं प्राप्स्ये तर्हि काषायवसनमुज्झित्वा शुक्ले वाससी परिगृह्य कर्ममार्गं स्वीकरिष्ये ।** तदा मण्डनोऽपि स्वीयां प्रतिज्ञां व्यधत्त । **कर्मभ्य एव मुक्तिरिष्टेति मे मतम् । यद्येतद्विषयोपपादने त्वया पराजितोऽहं भविष्यामि तर्हि त्वदुक्तविपरीतैव मे प्रतिज्ञा नाम शुक्ले वाससी विहाय काषायवसनं वसेयेति ।** एवं परस्परजयोत्सुकयोर्वादाभिलाषिणोः कण्ठयोरेकैकां मालां विधाय शारदयोक्तम् । **यस्मिन्काले यस्य गले माला म्लानिमुपैति तस्य तदैव पराजयो निश्चितः स्यात् ।** इत्युक्त्वा सा गृहकर्मणि व्यापृता । एवमन्योन्यवादः प्रारब्धः । तच्छ्रवणधृतकुतूहलाः सुरादयोऽपि मण्डनसदनादूर्ध्वमौत्सुक्येन स्थितवन्तः । अनेन

मण्डनप्रतिज्ञा ।

पराजयसूचकमाला-धारणम् ।

वादप्रारम्भः ।

प्रकारेण मिथोजयतर्षोत्कर्षसत्त्वेऽपि नैव तयोर्जन्यरोषोऽभूत् । एवंरीत्या पञ्चषाणि दिनानि वादे विजृम्भमाणे मण्डनेनोक्तम् । भवन्मतपुष्टीकरणे प्रमाणान्येव न सन्ति । श्रीशङ्करेणोक्तम् । **तत्त्वमसीति वाक्यान्येव प्रमाणतां प्राप्नुवन्ति ।** तत्राप्यनेकधा विकल्पः प्रकल्पितो मण्डनेन स तु शतधा खण्डितः शङ्करेण । ( दिनशतं यावद्वाक्कलहो व्यजृम्भतेत्यानन्दगिरिः । )

मण्डनपराजयः ।

अन्ते श्रीशङ्करयुक्तिमेवानुमोद्य मण्डनगले मालां म्लानिमुपेतामवलोक्याद्य युवामुभौ भिक्षार्थमुच्चलतमिति शारदा प्राह । प्रत्यहं शारदा मध्याह्ने वादे समाप्ते श्रीगुरुं भिक्षार्थे मण्डनं तु कर्मिणं भोजनायोत्तिष्ठतमिति वदन्ती तद्दिने मण्डनपराजयं वीक्ष्य तत्कृतप्रतिज्ञानुरोधेन कृतसंन्यासमेव तं मन्यमानोभावपि भिक्षार्थमाकारयामासेत्यर्थः । शारदा पुनः श्रीशङ्करमुवाच । पुरा कोपातिरेकवशतो मां शपता दुर्वाससा ममात्र वासस्यावधिस्ते जयो विहितः । स तु जयोऽधुना जातः । अतोऽहं यथागतमेष्यामीत्युक्त्वा ससम्भ्रमं प्रचलितामरण्यदुर्गामन्त्रेण बद्ध्वा तामपि जेतुकामः श्रीशङ्करस्तामुवाच । **जानेऽहं त्वां वाग्देवीम् । यदा त्वामहमनुज्ञास्यामि तदैव त्वं गन्तुमर्हसी**त्युक्तवन्तं यतिवर्यं शारदा प्रत्यभाषत । तथास्तु । तावन्तं कालमिह वसेयमिति ।

शारदागमननिरोधः ।

**॥ इति श्रीशङ्करमण्डनसंवादो नामाष्टमः सर्गः ॥ ८ ॥**

---

## ९ सर्वज्ञत्वनिर्वाहचिन्तनम् ॥

मण्डनाशङ्कासमाधानम् ।

कर्मजडो मण्डनः पुनराशङ्क्याह । भो यते पराजयेनानेनाभिनवेन नाहं विषादं प्राप्तोऽस्मि । किन्तु सर्वज्ञस्य जैमिनेर्वचनानि खण्डितानि । इत्येव हेतोः खिन्नोऽस्मि । यदिजैमिनिसूत्राणि खण्डितानि कथं तर्हि जैमिनेः सर्वज्ञत्वम् ।

श्रीशङ्करेणोक्तम् । न जैमिनेरभिप्रायः खण्डितः किन्तु वयमेवानभिज्ञतया मुनेरभिप्रायं न सम्यक्प्रतीमहे । मण्डनेनोक्तम् । यदि कविजनाविदितो जैमिनिमुनेः कश्चिदभिप्रायो विद्यते तर्हि तं वर्णय यथा वयमपि दलदहङ्कृतयस्तं हृदि कुर्महे । श्रीशङ्करेणोक्तम् । **परे ब्रह्मण्यभिप्राययुतानपि विषयेषु प्रवाहीकृतबुद्धींस्तत्रानधिकारिणोऽनुग्रहीतुमिच्छुरसौ मुनिर्जैमिनिः परब्रह्मप्राप्तिसाधनतया परं केवलं कर्मातिशयं निरूपितवान्न तु परं ब्रह्मेति । अस्य "यज्ञेन दानेन तपसा नाशकेनेति" श्रुतिवचनमेव प्रमाणम् । एवं स्वाशङ्काः साधारं खण्डिता अवलोक्य मण्डनोऽपि सानन्दोऽभूत्** । तथापि मण्डनः ससंशयो जैमिनिं ध्यायंस्तमवाप तेन चोक्तम् । भोः सुमते मण्डन भाष्यकारवचने मा भूत्ते संशयः । मम सूत्राभिप्राय एव तेनोक्तः **स तथैव नान्यथा** । अतः शङ्करमते प्रविष्टो भूत्वा संसारसागरं तर । इत्युक्त्वा जैमिनिर्मुनिरन्तर्धानमयात् । ततो मण्डनेनोक्तम् । भोः शङ्करेदृशं तेऽपूर्वं महिमानं पूर्वमबुद्ध्वा यदहमत्रवं तत्सर्वं क्षमस्व । असंख्यातैरेव पुण्यैस्तव गिरां परिचयं लब्धवानस्मि । अत्र धन्यतम एव तव कटाक्षझरीमवगाहते । अतोऽहं सुतादि सर्वं परित्यज्य भवच्चरणौ शरणं वृणोमि । किंकरममुमतः शाधि मां त्वां प्रपन्नम् । एवमाकर्ण्य श्रीशङ्करो मण्डनमनुग्रहीतुमिच्छुरस्य सहधर्मचरीं समुदैक्षत । तदा शारदयोक्तम् । सम्पूर्णतयायं मे पतिर्न त्वया जितो यदहं पत्युरर्द्धं शरीरम् । मामजित्वा सम्पूर्णजयो नैव त्वामाश्रयेत् ।

शारदानिर्बन्धः ।

इत्येवमुभयोः श्रीशारदाशङ्करयोर्विवादः प्रारब्धः । तयोः परस्परजयोत्सुकयोरन्योन्यपदयुक्तिभरैर्विचित्रा विवादकथा प्रववृते । एवं तयोरुभयोर्विवदमानयोरनल्पधियोः सप्तदश दिनानि व्यतीयुः । एवं चाचार्यानखिलेषु शास्त्रेषु परं परीक्ष्य स्वयं चिन्तयामास । शास्त्रविषये तु नायं मे पराजितुं शक्यः । बाल्ये कृतसंन्यासः कामशास्त्रविषयेऽतोऽमुं पराजेष्ये । इति विचिन्त्य श्रीशङ्करं प्रति शारदा पृष्टवती ।

श्रीशारदाप्रश्नः ।

कलाः कियन्त्यो वद पुष्पधन्वनः
किमात्मिकाः किं च पदं समाश्रिताः ।
पूर्वे च पक्षे कथमन्यथा स्थितिः
कथं युवत्यां कथमेव पूरुषे ॥ इति ॥

(माधवः.)

अत्रैव मनाग्भिन्नतयानन्दगिरिणा कथ्यते । तद्यथा ।
पतियत्याश्रमग्रहणात्पूर्वक्षणे महानसाद्गगनमवलम्ब्य ब्रह्मलोकं गच्छन्तीं सरसवाणीं दृष्ट्वा परमगुरुर्वनदुर्गामन्त्रेण दिग्बन्धनमाचकार । तदनन्तरं भोः सरसवाणि ब्रह्मशक्तिरसि । तदंशसम्भूतस्य मण्डनमिश्रस्य पत्नी त्वमुपाधिना प्रतिफलसि । तस्मान्मया साकं प्रसङ्गं कृत्वा गन्तुमर्हसि । इति परमगुरुणोक्ता प्रत्युवाच । पतिसंन्यासात्पूर्वमेव वैधव्यभयात्पृथिवी मया त्यक्ता । तस्मात्पुनः पृथिवीमहं न स्पृशामि । हे यते त्वं तु भूस्थः। कथं प्रसङ्गायैकविषयस्थितिर्युज्यते । इति । परमगुरुरेवं वदन्तीं प्रत्याह । मातस्तथापि भूम्युपर्याकाशे हस्तषट्कमात्रेणावतिष्ठ मया सह साङ्गं सर्ववाक्यप्रपञ्चसंचारं कृत्वा गच्छसि । इति सादरा भूत्वा तेन सह सर्वशास्त्रेषु वेदेतिहासपुराणेष्वपि समयप्रसङ्गं कृत्वा यतितिरस्काराय दुःप्रवेशकामशास्त्रे नायकानायकभेदप्रपञ्चेषु कृतबुद्धिरासीत् । तदानीं यतिवरस्तत्कथानभिज्ञस्तूष्णीमास । इति ।

कलाः कियन्त्य इति शारदाप्रश्नमाकर्ण्य सर्वज्ञेन श्रीयतिवर्येण चिन्तितम् । अस्योत्तरानुक्तावल्पवेदिता प्राप्यते । तस्मिन्नुक्ते तु धर्मसंक्षयः । कथमिदानीं कर्तव्यम् । इति विचिन्त्योक्तवान् । मासमेकं प्रतीक्षस्व (मासषट्कमित्यानन्दगिरिः) तदास्योत्तरं मया दीयते । इति तावन्तमवधिं लब्ध्वाश्रमान्निर्गत्य (अमृतपुरनामकं चिताङ्गणविशेषं प्राप्येत्यानन्दगिरिः ।) कुत्रचिन्मृतं मनुजेश्वरं वीक्ष्य स्वशिष्यान्पद्मपादादीनवोचत् । यथा पुरा मत्स्येन्द्रो नाम महात्मा स्वशरीररक्षणाय **गोरक्षसंज्ञं** स्वशिष्यमाज्ञाप्य कस्य चिन्मृतकस्य राज्ञः शरीरं

उत्तरदाने मासावधिः ।

परकायप्रवेशविचारः ।

प्रविश्य तस्य राज्यं प्राप्तस्तथाहमपि शिष्टसरणीपालनार्थं परकायं प्रविश्य कामशास्त्रपरिशीलनं कुर्वे । तथा च यावत्कामकलाज्ञानायोचितं शरीरमास्थितोऽहं विषमेषुककामनुभवामि तावदिदं मे शरीरं शिलायामस्यां वसद्भिर्युष्माभिरप्रमादं परिपाल्यताम् । इतिशिष्यवर्गमनुशास्य गुहायां देहं विसृज्य प्रवलयोगबलादमरकाख्यनृपतेर्मृतं शरीरं करन्ध्रमार्गेण चरणाग्रं यावच्छनैः शनैः प्रविष्टः । तं नृपतिं प्राप्तजीवं प्रेक्ष्य तद्भार्याः प्रभूतहर्षिता बभूवुः । सर्वे जनाः पणहपटहाञ्शङ्खांश्च दध्मुर्दुन्दुभींश्चाजघ्निरे । तेषां घोषो रोदसी बधिरीचकार ।

देहविसर्जनम् ।

अमरकनृपतेः पुनरुज्जीवनम् ।

॥ इति सर्वज्ञनिर्वाहचिन्तनोपायो नाम नवमः सर्गः ॥ ९ ॥

---

## १० अथामरकभूपतिकायप्रवेशः ॥

तं नृपतिं मृतिमुपेत्य पुनरुत्थितं पूर्वगुणभिन्नं वीक्ष्य सर्वे मन्त्रिणश्चिन्तयामासुः । अनृतुपु तरवः सुपुष्पिताम्रा गोमहिष्यो बहुतरदुग्धदुग्धाः क्षितिरभिमतवृष्टिराढ्यसस्या सर्वाः प्रजाश्च विहितधर्मरताः । अस्य राज्ञः प्रभावादयं कलिकालोऽपि त्रेतायुगमत्येति । तत्कोऽपि महात्मा कापि स्वदेहं स्थापयित्वा राजवर्ष्म प्रविश्य धरणीं शास्ति । तत्तथा वयं कुर्मो यथायं गुणवारिधिः पूर्वं स्वं वपुर्नैव प्रतिपद्येत । अथ ते रहस्याज्ञां चक्रुः । यस्य कस्यापि भुवि विगतासोर्वपुः प्राप्यते चेत्तदविचार्यैव सद्यो दह्यतामिति । ( नूतननरपत्यालापविशेषज्ञया तज्ज्येष्ठपत्न्यैवेदं विदितमितरशवदाहाज्ञापि तयैव दत्तेत्यानन्दगिरिः । ) नूतनो नृपतिरपि मन्त्रिपु राज्यभारमारोप्य विलासिनीभिर्विविधविपयसुखं बुभुजे । तदायं नरपतिर्वात्स्यायनकामसूत्राण्यवेक्ष्य स्वयमप्यभिनवमेकं निबन्धं नृपवेषधारी

जनानन्दः ।

मन्त्रिजनाज्ञा ।

मृतोत्थितराजविलासः ।

यतिर्विरचयामास। तत्र गुहायां श्रीशङ्करशिष्या मासमेकं समतीतमवलोक्य परस्परं चिन्तयन्ति स्म। मासो गतः पञ्चषा घस्रा अपि व्यतीताः। नाद्यापि श्रीगुरूणामागमनं भवति। क्वाधुना क्षितितले तान्मृगयामहे। इति वदन्तः श्रीमदाचार्यशिष्याः कांश्चित्तत्र गुरुदेहरक्षणाय नियोज्यापरे मतस्थिरे।

श्रीशङ्करशिष्यचिन्ता।

"ते चिन्वन्तः शैलाच्छैलं विषयाद्विषयं भुवमनुवेलम्। प्रापुर्धिकृतविबुधनिवेशान्स्फीतानमरकनृपतेर्देशान्" ॥

श्रीगुरुशिष्याणाममरकपुर्यामागमनं गायकवेषधारणं च।

तत्रत्यं राजानं मृतोत्थितमाकर्ण्यात्रैव गुरवः सन्तीत्यमन्दं धैर्यमविन्दन्। गायनलोलं तरुणीसक्तं भूपतिं ज्ञात्वा धृतगायकवेषा अमरकनगरे प्रविष्टाः। प्रासादमासाद्य तरुणीमध्यगतमवनीपतिमालोकयामासुः। ते तूपविष्टा गानव्याजेन स्वगुरुं प्रतिबोधयन्तो जगुः।

नरपतिबोधनम्।

भृङ्ग तव सङ्गतिमपास्य गिरिशृङ्गे
तुङ्गविटपिनि सङ्गमजुषि त्वदङ्गे स्वाङ्गरचिताः।
सकलुषान्तरङ्गाः सङ्गमकृते भङ्गमुपयान्ति भृङ्गाः॥
(माधवः।)

यत्सत्यमुख्यशब्दार्थानुकूलं तत्त्वमसि तत्त्वमसि राजन्।
नह्येतत्त्वं विदितं नृषु भावं तत्त्वमसि तत्त्वमसि राजन्॥

इति परोक्तिगर्भैः श्लोकैः सप्तभिर्बोधयामासुरित्यानन्दगिरिः।

एवं शिष्यैरुद्बोधितो गुरुस्तान्पूरिताशान्विधाय प्रेष्य निर्ज्ञातकर्तव्यो मूर्च्छामवलम्ब्य राजवर्ष्म विहाय पूर्वगुहाद्वारमागत्य राजभृत्यविसृष्टाग्निना दह्यमानं स्वशरीरं योगधुरंधरो झटिति प्रविश्य तज्ज्वालाप्रशान्त्यै नृसिंहमस्तौत्।

राजदेहत्यागः स्वदेहप्रवेशश्च।

ब्रह्मेन्द्ररुद्रमरुदर्ककिरीटकोटि-
सङ्घट्टिताङ्घ्रिकमलारुणकान्तिकान्त।

लक्ष्मीलसत्कुचसरोरुहराजहंस
लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥
( इत्याद्यष्टभिः श्लोकैरित्यानन्दगिरिः । )

ततो नरहरिकृपया शान्ते वह्नौ स्वशिष्यैः समेतः श्रीशङ्करगुरुः पुनरपि माण्डनं गृहं प्राप्य तेन पूजितः सरस्वत्योक्तः । अधुनाहं त्वया पराजिता । यत्त्वत्सकाशतः पराजयो ह्यावयोः प्राप्तो न स लज्जाहेतुः । इदानीं मां परं धाम गन्तुमनुजानीहि । इत्युक्त्वान्तर्हितां देवीं योगशक्त्या पश्यन्गुरुराह । **जाने त्वां वाग्देवीम् । अस्मदादिनिर्मितेषु क्षेत्रेषु तव सान्निध्यं सन्ततं विधेहि । इति ।** अथ सापि स्वीयं धाम जगाम ।

शारदानिर्गमनम् ।

मण्डनोऽपि विधिपूर्वकं सर्वं वित्तं यागे ब्राह्मणेषु वितीर्य श्रीशङ्करयतिवर्यसकाशादेव संन्यासं गृहीत्वा तत्त्वमसीत्यद्वैतं ब्रह्मोपदिष्टः **स एव पुरतः सुरेश्वराख्यया भुवि पप्रथे ।**

मण्डनेन संन्यासग्रहणम् ।

इति वशीकृतमण्डनपण्डितः
प्रणतसत्करणत्रयदण्डितः ।
सकलसद्गुणमण्डलमण्डितः
स निरगात्कृतदुर्मतखण्डितः ॥ (माधवः ।)

**॥ इति नरपतिकायप्रवेशो नाम दशमः सर्गः ॥ १० ॥**

---

## ११ अथ भैरवाख्यस्य कापालिकस्य निर्जयः ॥

कदाचिदेकः कश्चित्कापालिको **भैरवाख्यः** श्रीशङ्करं प्राप्य प्राह । महेश्वरः प्रसन्नो मां वत्स वरं वृणीष्वेत्यब्रवीत् । मयोक्तम् । सहैवानेन देहेन यथा तवाहं पदवीं प्रपद्ये तथा कुरु । ततो महेशेनोक्तम् । **सर्वज्ञस्य वा नरपतेर्वा शिरो**

कापालिकदर्शनम् ।

हुताशने जुहोपि चेत्तव समीहितं सफलं भविष्यति । इत्युक्त्वेशोऽन्तर्धिमगात् । महता श्रमेणान्विष्टमपि नृपतिशिरो न मया समासादितम् । त्वं तु सर्वज्ञः । परोपकाराय धृतदेहोऽसि । देहस्तु नश्वर इति जानासि । परोपकृत्यै स्वीयान्देहांस्त्यक्तवन्तोऽपि जना बहवोऽभूवन् । सुरद्विषां हननाय दधीचिरिन्द्राय स्वीयान्यस्थीनि ददौ । जीमूतवाहनोऽपि स्वदेहं गरुडाय समर्पयामास । त्वया देहे समर्पिते मदीयं कार्यं सिद्धं भवेत्तवापि कीर्तिराचन्द्रार्कं स्थिरा भवेत् । अतः परं त्वमेव प्रमाणम् । इति ।

श्रीशङ्करेण प्रत्युक्तम् । भवतु । तथापि शिष्या मामकीना बहवः । ते मद्रक्षणेऽतीव जाग्रति । अतोऽहं विजने यदा समाधिमग्नो भवामि तदा स्वं कार्यं त्वं सम्पादयस्वेति । तथास्त्विति स कापालिको गुरुसमाधिनिष्ठावेलां निरूप्य समाधिगं गुरुं विलोक्य त्रिशूलमुद्यम्य यावद्धन्तुमुद्यतस्तावदेव पद्मपादो ज्ञानचक्षुषा तं वृत्तान्तं ज्ञात्वोग्रसिंहरूपी तां दुश्चेष्टामवलोक्य तत्कापालिकस्योपरि सहसा समुत्पत्य तद्वक्षो नखैर्विदारयामास । तदार्भाटचलितसमाधिर्गुरुः शनैर्नेत्रे उन्मील्य विकरालवक्त्रं मानवपश्ववक्त्रं स्वसंमुखे समीक्षाञ्चक्रे । पुष्कलाभिः स्तुतिभिः स्तुतो नृहरिर्यदा प्रशान्तस्तदा पद्मपादो मुनिः स्वभावमेत्य शान्तो भूत्वा स्वप्नानुभूतमिव तं स्वात्मानं स्मरञ्श्रीगुरवे प्रकर्षेण नतिं चकार ।

श्रीशङ्करसंमतिः ।

पद्मपादकोपः ।

॥ इति भैरवनिर्जयो नामैकादशः सर्गः ॥ ११ ॥

## १२ हस्तामलकतोटकाख्ययोः शिष्ययोराश्रयणम् ॥

अथैकदा तीर्थयात्राप्रसङ्गेन स्वशिष्यैः समेताः श्रीमदाचार्याः श्री-"गोकर्णमभ्यर्णचलार्णवौघ"मागम्य श्रीमहेश्वरं प्रणम्य स्तुत्वा मूकाम्बिकासदनं प्रतस्थिरे । तत्र विगतासुमेकं पुत्रं स्वाङ्के विधायातीव शो-

श्रीगोकर्णे शङ्करकृतचमत्कृतिः ।

काकुलौ दीनौ दम्पती वीक्ष्य श्रीशङ्करयतिवर्योऽपि परं दुःखाकुलोऽभूत्।

तदाऽशरीरिणी वागुदचरत्। **रक्षणाक्षमस्य जनस्य केवलं दया दुःखायैव सम्पद्यते**। इति तां वाणीमाकर्ण्य श्रीशङ्करेण प्रत्युक्तम्। सत्यं सा दया तवैवैकस्य शोभते। अनयोर्दम्पत्योर्दुःखं सद्यः परिहरेत्युक्तमात्र एव स शिशुः सुप्तोत्थित इवोदतिष्ठत्। इदं दृष्ट्वा सर्वे जना विस्मयाकुलाः श्रीशङ्कराचार्यख्यातिं प्रथयामासुः। तत्रैव कतिचिद्दिनानि भगवद्भिः कृतो वासः। ततः कदाचिदाचार्योः सह स्वैः शिष्यैः **श्रीबलिसंज्ञं** द्विजग्रामकमायान्। कथंभूतः स ग्रामः। तत्रत्यान्कर्मनिष्ठानप्रमत्तान्द्विजातीनवलोक्य नैव स्थलं लब्ध्वापमृत्युर्ग्रामाद्बहिरेव याति स्म। तत्राहिताग्नीनां द्विसहस्रं वेदविहितमार्गेषु दक्षं वसति स्म। तत्र **प्रभाकरो** नाम विद्याप्रभाकरः प्रथितानुभावः प्रवृत्तिशास्त्रैकरतो बभूव। सकलसम्पत्समृद्धिसंयुतोऽपि पुत्रस्य मुग्धचेष्टतया नैव तोषमयात्। ये ये पण्डिता यतयः साधवश्च तत्रागतास्तेभ्यस्तेभ्यः स्वं पुत्रं दर्शयन्नास्ते स्म। एवमेव श्रीशङ्करयतीन्स्वशिष्यसमेतानागतानाकर्ण्य प्रभाकरपण्डितः स्वसुतं मुग्धचेष्टं तत्र नीत्वा दर्शयामास। कस्त्वं किं जडवदाचरसीत्याचार्यैरनुयुक्तः स बालकोऽब्रवीत्।

बलिग्रामागमनम्।

हस्तामलकः शिष्यः।

> नाहं जडः किन्तु जडः प्रवर्तते
> मत्संनिधानेन न सन्दिहे गुरो।
> षडूर्मिषड्भावविकारवर्जितं
> सुखैकतानं परमस्मि तत्पदम्॥ (माधवः.)

षडूर्मिविकारै रहितं परं ब्रह्माहमस्मि नाहं जडः। इत्यादयस्तेन श्लोकाः पठिताः। **परमेकं तत्त्वं ये श्लोका हस्ततलगतधात्रीफलवत्प्रकाशयन्ते ते हस्तामलकाः प्रसिद्धाः। तदेव नामाचार्यैस्तेषां श्लोकानां कर्त्रे दत्तम्**। एवं निवृत्तवचने तस्मिन्बालके यतीन्द्रस्तत्पितरं प्रोवाच। नायं बालो भवत्समीपे वस्तुमर्हति। नानेन जडेन विद्यते भवतोऽपि किंचित्प्रयो-

जनम् । गृहादिषु नास्त्यस्यासक्तिः । अतो वयमेनं गृहीत्वा यास्याम इत्युक्त्वा परेद्युस्तं शिष्यगणे निवेश्य गृहीत्वा याता यतिवर्याः ।

शृङ्गगिरिं प्रति शङ्करस्यागमनम् ।

तत आचार्याः सह शिष्यैः शृङ्गगिरिं प्रतस्थिरे यस्मिन्नृष्यशृङ्गोऽद्यापि तीव्रं तपश्चरन्नास्ते यं समया च रम्या तुङ्गभद्रा वहति । तदद्रिस्थान्मुनीञ्शङ्करो भाष्यमुख्यान् ग्रन्थानध्यापयामास । तत्रैकं विद्यापीठं मठं संस्थाप्य यतिवर्यः सुरेश्वराख्यं स्वशिष्यं पीठाध्यक्षमकरोत् । तत्र रम्यमेकं शारदायतनमपि निर्ममे । (तत्र श्रीगुरुर्द्वादशाब्दं स्थित्वा स्वाञ्छिष्यानुपदिश्य सुरेश्वरं तत्र स्थापयित्वा निश्चक्रामेत्यानन्दगिरिः ।)

तोटकः शिष्यः ।

तत्रैव **तोटको** नाम शिष्यः श्रीमदाचार्याणामभवत्तद्यथा । तत्र गिरिर्नाम कश्चित्पुरुषो वसति स्म । स तनुवाग्विभवोऽपि सदैव गुरुशुश्रूषापरोऽभूत् । श्रीगुरोः स्नानात्पूर्वं स्नात्वा कम्बलवस्त्रप्रमुखैरासनमुचितं करोति स्म । काले काले दन्तपरिशोधनकाष्ठं शास्त्रोक्तं ददाति स्म । किं बहुना स श्रीगुरुं छायेवानुगच्छति स्म । गुरोः समीपे न जृम्भते स्म । चरणौ प्रसारयन्न निषीदति स्म । नोपेक्षते स्म न वा बहुभाषते स्म। सदैव विनयोपपन्नो गुरुपुरतस्तिष्ठति स्म । एवंभूते तस्मिञ्छिष्यवरे कदाचित्स्वशाटीप्रक्षालनाय नदीं गतवति सति तस्यागमनमीक्षमाणो भक्तेषु वत्सलतया श्रीगुरुर्व्याख्यानाख्ये कर्मणि विललम्बे । अथासंख्यातेषु शिष्यवरेषु शान्तिपाठं कर्तुमुद्यतेषु स देशिकेन्द्रः स्थीयतां गिरिरपि क्षणमात्रादेष्यतीति गिरति स्म । तां वेदान्तरूपां गुरूक्तिं निशम्य **कुड्यतुल्यो जडः शास्त्रेऽनधिकार्यपि किं मुधैव प्रतीक्ष्यत** इति पद्मपादमुनिना भीतिः समदर्शि । ततः पद्मपादमुनेरनल्पं गर्वमपहर्तुं स्वाश्रयेषु करुणातिशयाच्छ्रीगुरुस्तत्क्षणे मनसैव गिरये चतुर्दशविद्याः समुपदिदेश । तत्क्षणादेव सोऽधीतसकलविद्यो बभूव। पुरस्तात्तेनैव गुरुकृपया त्रयीशिरोऽर्थो रम्यः कृतः । तमवलोक्य ग्रन्थं पद्मपादादयः स्वगर्वं विहाय विस्मयाकुलाः समजायन्त ।

यस्माद्स्माद्गिरेर्नाम शिष्यात्तोटकसंज्ञान्याचार्यस्तोत्रपराणि पद्यान्याविरभूवंस्तस्मात्तं श्रीशङ्करस्तोटकं वदति स्म । एवं श्रीमदाचार्यशिष्यांश्चतुरः पद्मपादहस्तामलकसुरेश्वरतोटकाख्यानवलोक्य किमेते चत्वारो धर्मार्थकाममोक्षरूपाः, किमथवा ऋग्यजुःसामाथर्ववेदाः, किंवा सालोक्यसामीप्यसारूप्यसायुज्याख्या मुक्तिभेदा, आहोस्विद्ब्रह्मणश्चत्वारि वदनान्येव सन्तीति पण्डिताश्चिरं विमर्शन्ति स्म ।

तोटकसंज्ञार्थवत्ता शिष्यचतुष्टययोग्यता च ।

॥ इति हस्तामलकतोटकसंश्रयो नाम द्वादशः सर्गः ॥ १२ ॥

## १३ वार्तिकान्तब्रह्मविद्याप्रचारः ॥

अथ श्रीगुरवः पद्मपादमूचुः । मद्भाष्यस्योपरि निबन्धमेकं विरचय । हस्तामलकेन वार्तिकं कर्तव्यम् । सुरेश्वरं प्राहुः । स्वतन्त्रमेकमध्यात्मनिष्ठं ग्रन्थं रचयित्वा मे दर्शय । इत्युक्तः सुरेश्वरो नैष्कर्म्यसिद्धिग्रन्थं रचयामास । आचार्यास्तं ग्रन्थमवलोक्य परं जहृषुः । सुरेश्वराचार्येणोक्तम् । आचार्यवाक्यतो भाष्यस्य वार्तिके मया विधित्सिते यदन्ये विघ्नान्विदधुस्तद्वार्तिकं येन केनापि रचितं स्यात् पृथिव्यां न प्रसरेदिति कोपाच्छापमुत्ससर्ज । आचार्यास्तं सूक्तिभिः सान्त्वयित्वा वेदत्रयीभाष्ये वार्तिकद्वयं कर्तुं समादिशन् । इति समादिष्टः सुरेश्वरस्तैत्तिरीयबृहदारण्यसंज्ञयोस्तयोर्भाष्ययोरुदारं वार्तिकद्वयं कृत्वा निजदेशिकायोपायनी चकार । पद्मपादस्तु गुरोराज्ञया परां भाष्यस्य टीकां व्यदधात्स्याः पूर्वभागः पञ्चपादिकेति प्रसिद्धः । तच्छेषगा वृत्तिरिति ख्याता । व्याससूत्रविवेचनाय पद्मपादष्टीकाभिधं विजयडिण्डिमं निर्माय गुरुदक्षिणामदात् । तदा श्रीशङ्करयतयः सुरेश्वरं पुनराहूयाहुः । वत्स दैवयोगाद्वाचस्पतित्वं वसुंधरायामधिगम्य भव्यां मम भाष्यटीकां

ग्रन्थरचनायै गुरुणा कृताज्ञा ।

विधास्यसि । सा क्षितावाभूतसंलयं जीयान्मा ते संशयो भूत् । आनन्दगिरिमुख्यानृषीनाहूय तानद्वैतपरनिबन्धबाहुल्यरचनाय न्ययोजयन् ।

**॥ इति वार्तिकान्तब्रह्मविद्याप्रचारो नाम त्रयोदशः सर्गः ॥१३॥**

---

## १४ पद्मपादस्य तीर्थयात्रानिरूपणम् ॥

अथ पद्मपादं तीर्थयात्राः कर्तुं समादिश्य सुरेश्वरादिभिः सह स्वशिष्यैः श्रीमदाचार्याः शृङ्गगिरौ कंचित्कालमूषुः ।

आचार्यमातुरन्त्यकालः ।

तदा योगशक्त्या मातुर्वृत्तान्तमवगम्य चिरात्तत्समीपमासेदुः । तयोक्तम् । पुत्राधुना जराजीर्णमिदं शरीरं वोढुं नाहं शक्तास्मि । शास्त्रोदितवर्त्मना संस्कृत्य मां पुण्यलोकान्प्रापयेति । तदाचार्यास्तस्यै सनातनमेकमद्वितीयं ब्रह्मोपदिश्य मातुर्वचनाच्छ्रीमहेश्वरं तुष्टुवुः । तेन स्तुतेन स्वदूतान्प्रस्थापितांस्त्रिशूलहस्तान्समागतानवलोक्य नाहमेताननुगच्छेयमिति ब्रुवन्त्यां मातरि पुनराचार्या विष्णुं तुष्टुवुः ।

विष्णुस्तवः ।

विहिताञ्जलिना निषेव्यमाणम्
विनतानन्दकृताग्रतो रथेन ।
धृतमूर्तिभिरस्त्रदेवताभिः
परितः पञ्चभिरञ्चितोपकण्ठम् ॥ (माधवः.)

महनीयतमालकोमलाङ्गं मुकुटीरत्नचयं महार्हयन्तम् ।
शिशिरेतरभानुशीलिताग्रं हरिनीलोपलभूधरं हसन्तम् ॥ (माधवः)

इत्यादिभिः श्लोकैः स्तुतां तादृशीमेव विष्णुमूर्तिं योगिवत्सा हृदये धृत्वा स्वदेहं तत्याज ।

विष्णुदूतागमनम् ।

ततः शरच्चन्द्रमरीचिरोचिर्विचित्रपारिप्लवकेतनाढ्यम् ।
विमानमादाय मनोज्ञरूपं प्रादुर्बभूवुः किल विष्णुदूताः॥
(माधवः)

तान्वैमानिकान् रम्याकृतीन्दृष्ट्वा माता सुतं बहुशोऽस्तौत् । तदा तैः सा

श्रीशङ्करमातुर्विमानारोहणं वैकुण्ठपदप्राप्तिश्च ।

बहुमानपूर्वकं विमानमारोप्यानायि । सा तदाग्न्याद्यभिमानदेवतानां वायुसूर्यचन्द्रवरुणादीनां लोकान्क्रमशोऽतीत्य परं वैकुण्ठपदं प्रपेदे ।

स्वयं मातृक्रियाचिकीर्षो बन्धुकृतनिषेधस्तेभ्यो दत्तः शापश्च ।

मातुरन्त्यं दाहादिकर्म मातुराज्ञानुरोधेन स्वयमेव चिकीर्षुः श्रीशङ्करयतिर्बन्धूनाजुहाव । तैः सर्वैरागत्योक्तम् । हे यते वञ्चक कथं तवास्मिन्कर्मण्यधिकारः । इति न केवलं गुरुमुचैर्निनिन्दुरपि तु वह्निमपि नाददिरे । तदा श्रीशङ्करः

इतः परं वेदबहिष्कृतास्ते द्विजा यतीनां न भवेच्च भिक्षा।
गृहोपकण्ठेषु च वः श्मशानमद्य प्रभृत्यस्त्विततिताञ्शशाप ॥
( माधवः. )

तत्क्षणे श्रीगुरुर्गृहसमीपे शुष्ककाष्ठानि संचित्य तोयपात्रं धृत्वा मातुर्दक्षिणे बाहौ वह्निं ममन्थ तेन च तस्या दाहादिकाः क्रिया निर्वर्तयाञ्चकार। उपरि निर्दिष्टेनाचार्यदत्तेन शापेनाद्यापि तद्देशीयजना नाम **कालटिनामाग्रहारद्विजा** वेदं नाधीयते तत्र च यतीनां भिक्षा नैव भवति । यद्यपीदमाचार्यशापकृत्यमशास्त्रीयतया भाति तथाप्यनिन्द्यमेव, यथा भार्गवस्य स्वमातृहत्या न निन्द्या यथा च ये केचिन्मुनयः प्रार्थिता वृकाय स्वपुत्रान्ददुस्तेषां कृतिर्न निन्द्या । एवं श्रीगुरुरन्यमतशातनसहायस्य पद्मपादस्यागमनं निरीक्षमाणस्तत्रैव कंचित्कालं तस्थौ ।

आचार्यकृतशापस्यादोषवत्त्वम् ।

पद्मपादस्य तीर्थयात्रापर्यटनम् ।

पद्मपादोऽपि गुरुणा तीर्थयात्रापर्यटनायाज्ञप्तः प्रथमं दक्षिणां दिशं प्रस्थाय तत्र श्रीकालहस्तीश्वरं दृष्ट्वा नत्वा श्रीकाञ्चीक्षेत्रमागमत् । नातिदूरे वसन्तं कृष्णलेशाख्यं लक्ष्मीकान्तमेकभक्त्या प्राणमत् । ततः पुण्डरीकपुरं जगाम । तत्र शिवगङ्गातीर्थे स्नात्वा रामसेतुं प्रति प्रतस्थे । पथि कावेरीं दृष्ट्वा तत्र सस्नौ । गच्छन् पथि मातुलस्य गृहं प्राप । तत्र पद्मपादं वीक्ष्य

पद्मपादस्य मातुलगेहागमनम् ।

रुरोद कश्चिन्मुमुदेऽत्र कश्चिज्जहास पूर्वाचरितं बभाषे ।
कश्चित्प्रमोदातिशयेन किंचिद्वचस्स्खलद्वीः प्रणनाम कश्चित् ॥
( माधवः )

तत्रत्या जना अवोचन् । कस्यचिदस्मद्गृहमागतस्य विप्रस्य मुखाद्भवन्तं कृतसंन्यासं वयमश्रौष्म । अद्य तु त्वं दैवादागतः । अथ स्वकृतभाष्यगां टीकां स्वमातुलाय पद्मपादोऽदर्शयत् । तां टीकां वाचयित्वा तत्र **स्वाभिमतं प्रभाकरमतं** विशेषान्निराकृतमालोक्य समत्सरोऽपि साधुरयं निबन्ध इत्यभ्यनन्दत् । ततः सेतुं जिगमिषुः पद्मपाद उवाच । इमं पुस्तकभारं तवालये न्यस्य सेतुं गच्छामि । सम्यक्त्वया पुस्तकानि संरक्ष्याणि । इत्युक्त्वा गच्छतस्तस्यानिष्टानि निमित्तानि जातानि । वामं नेत्रमस्पन्दत । वामो बाहुः पुस्फोर तथा वामोरुरपि । सर्वाण्येतान्यगणयित्वैव स जगाम । गते तस्मिंस्तस्य मातुलश्चिन्तयामास । अस्मिन्ग्रन्थे गुरुपक्षहानिः । अस्य दाहे कृते गुरुपक्षस्य प्रचारो भविता । नास्य निराकरणे मे शक्तिः । **पक्षनाशाद्गृहनाश एव श्रेयानिति** विचिन्त्य स्वगृहेऽग्निं निक्षिप्य गृहं मे दग्धं गृहं मे दग्धमिति सोरस्ताडमुच्चै रुरोद । सेतुयात्रां कृत्वा पुनर्मातुलग्रामं प्राप्य पद्मपादो मातुलगृहं दग्धं श्रुतवान् । तदानीं मातुल उवाच । भवत्पुस्तकनाशो यथा मे दुःखदो भवति न तथा मद्गृहनाशः । इति मातुलस्य दीनं वचनमाकर्ण्य पद्मपादेनोक्तम् । भवतु । यद्यपि मे पुस्तकानि नष्टानि तथापि मे बुद्धिर्न नष्टा । पुनस्तादृशं ग्रन्थं रचयिष्यामि मा दुःखं कुरु । इति तद्वचनमाकर्ण्य पुनरयं ग्रन्थं रचयिष्यतीति भीतो मातुलस्तन्मनोघ्नं **मतिमान्द्यकरं किंचिद्द्रव्यं भोजने दत्तवान**तस्तट्टीकां विधातुं नैव स समर्थोऽभूदित्यपि केचिद्ब्रुवन्ति । अथ पद्मपादश्चिरमदृष्टश्रीगुरुचरणस्त-

मातुलगेहे पुस्तकन्यासः।

पद्मपादमातुलस्य कुविचाराः ।

पद्मपादप्रत्यागमनम् ।

मातुलकुकृत्यप्रवादः ।

श्रीगुरुचरणदर्शन-काङ्क्षा।

द्दर्शनलालसो गुरवः केरलेषु भवेयुरिति चिन्तयित्वा केरलान्प्रतस्थे। स्वशिष्यागमनं वीक्ष्य गुरवो जहृषुः। पद्मपादः समेत्य श्रीगुरुचरणौ प्रणम्योपविष्टः स्वकृतटीकादाहः स्वमातुलसकाशादेव जात इत्युदीरयामास। एवमुक्तवन्तं पद्मपादं सुधास्यन्दिभिर्वचनैः सान्त्वयित्वावोचन्गुरवः। वत्स मा दुःखं कार्षीः। विचित्रेयं दैवी गतिः। **अयमसावर्थो मया पूर्वं ज्ञातः सुरेश्वराय कथित एवास्ति।** अद्य ते शोको यातु। सत्वरं पुनस्तां टीकां लिखेत्यमुना प्रकारेण पद्मपादमाश्वास्य भाष्यकृतस्तां **पञ्चपादीं** कृतिं पूर्वयैवानुपूर्व्या युक्तां तस्मायाचख्युः। अव्याहतज्ञानशक्तीनां श्रीगुरूणां तु नैवेयं कृतिश्चित्रा। पञ्चपादीं पुनर्हठात्तां लिखित्वा पद्मपादः परमानन्दभरेण

पद्मपादेन स्ववृत्तान्तनिवेदनम्।

श्रीगुरुकृपया पञ्चपादिकायाः पुनर्लेखनम्।

" .... .... .... .... .... .... .... "

उदतिष्ठदतिष्ठदभ्यरोदीत्पुनरुद्गायति तु स नृत्यति स्म ॥

(माधवः.)

एवंप्रकारेण पद्मपादेन सह कंचित्कालं श्रीगुरवस्तस्थुः। तत्रत्यनरपतिः पूर्वदृष्टो राजशेखरो भगवद्दर्शनतर्षपूरितमानसः सम्प्राप्य साष्टाङ्गं प्रणम्योपविष्टः। अनामयप्रश्नानन्तरं भगवान्यतिवरः प्राह। राजंस्त्वया रचितपूर्वं नाटकत्रयं जागर्ति किम्। तेन प्रत्युक्तम्। भगवंस्तत्प्रमादादग्नावाहुतितां गतम्। मुधैव मे सर्वे तद्रचनाकृतप्रयत्ना गता इति दुःखितं श्रीगुरुः प्राह। मैव दुःखाकुलो भूरित्युक्त्वा **पुनस्तन्नाटकत्रयं साग्रं लिखेत्युक्तो** राजा श्रीगुरुमुखात्पठितं पुनः समग्रं तन्नाटकत्रयवरं परमहर्षेण लिखित्वा किमिहेदानीं करवाणि भगवन्नाज्ञां देहीति राजशेखरः पप्रच्छ। ततो भगवद्भिरुक्तम्। कालटिनामाग्रहारे द्विजकर्मानधिकारिणो मया शप्ताः।

राजशेखरदर्शनम्।

नाटकत्रयपुनर्लेखनं राजशेखरोपदेशश्च।

शापानुसारेणैव ते विधेयाः । इति गुरूणामाज्ञां मूर्धन्यादाय परं ब्रह्मोपदिष्टः सानन्दं स्वपुरीं समाययौ ।

## ॥ इति पद्मपादतीर्थयात्राटनार्थको नाम चतुर्दशः सर्गः ॥ १४ ॥

---

### १५ दिग्विजयः ॥

दिग्विजयारम्भः । सेतुं प्रत्यागमनम् । शाक्तखण्डनम् ।

पाण्ड्यचोलद्रविडजयः काञ्चीनगर प्रत्यागमनं तान्त्रिकखण्डनं च ।

अथ सहस्रैः शिष्यवरैः सुधन्वना राज्ञा च समेताः सर्वाः ककुभो विजिगीषवः प्रथमं सेतुमाचार्याः प्रतस्थिरे । तत्र तेषां शाक्तैः सह महान्विवादोऽभूत् । युक्तिभरैस्ताञ्शाक्तान्प्रतिवाग्व्याहाराशक्तान्कृत्वा लोकहिताय सेतुं कर्मसेतुं चक्रुः । रामनाथमभिपूज्य पाण्ड्यैः सह चोलान्द्रविडांश्च स्ववशे विधाय हस्तिगिरेर्मेखलीभूतां काञ्चीं प्रापुः । तत्र चित्रं देवमन्दिरं निर्माय तान्त्रिकांश्च विनिवार्य भगवत्याः पूजां विस्तारितवन्तः ।

आन्ध्रजयः । वेङ्कटगिरिं प्रत्यागमनम् । विदर्भजयः । कर्णाटस्थकापालिकजयः ।

अथ स्वयमेव शरणागतानान्ध्राननुगृह्य वेङ्कटाचलं प्रणिपत्य विदर्भनगमन् । तत्र क्रथकेश्वरः शरणमायात् । ततः कर्णाटवासान् कापालिकाञ्जेतुमगमन् । तत्र क्रकचो नाम कापालिकमुख्यः श्रीमदाचार्यान्समागतानाकर्ण्य विवादायागतवान् । ततः कापालिकैः सह सुधन्वनो नृपतेर्महद्युद्धं समापेदे । ततः क्रकचः स्वकीयान्बहुलान्विहतान्विलोक्य पुनः शङ्करसमीपमागत्य पश्य योगिन्मम सामर्थ्यमिति वदन् कपालं गृहीत्वा नेत्रे निमील्य भैरवं ध्यायन् सुरया पूरितं तन्निपीयोपविष्टे भैरवः समागत्य मय्येव श्रीशङ्कररूपे कथमपराध्यसीत्युक्त्वैव तच्छिरः स्वयं रोषेण जहार । इदमवलोक्य सर्वे द्विजा हृष्टाः । एवमेव तेषु तेषु देशेषु पाषण्डपरान्द्विजान्मभ्रन्तो यतिराजाः पश्चिमसमुद्रसमीपं

पश्चिमोदधिप्राप्तिर्गोकर्णागमनं तत्र नीलकण्ठपराजयश्च ।

समागत्य **गोकर्णमगमन्** । तत्र प्रणतेभ्यो निगमान्तविद्यां प्रतिपादयन्तीत्येतं वृत्तान्तं हरदत्तो नाम शिष्यः स्वगुरवे **नीलकण्ठाय** निवेदयामास । तेन चोक्तं शिष्येण । भगवन् स्ववशीकृतभट्टमण्डनादिः श्रीशङ्करो नाम यतिः कश्चिदिदानीमार्यपादाञ्जिगीषुरिहायातः । इदमाकर्ण्य नीलकण्ठेन सगर्वाटोपं प्रत्युक्तम् ।

सरितां पतिमेष शोषयेद्वा सवितारं वियतः प्रपातयेद्वा ।
पटवत्सुरवर्त्म वेष्टयेद्वा विजये नैव तथापि मे समर्थः ॥

( माधवः. )

अहो तेषां गर्वोक्तिः । पुनश्च तेनोक्तम् । परपक्षलक्षणान्धकराणां निवारणे स्फुरद्भिः सूर्यैर्मम तर्कैरधुनैवानेकधा विशीर्यमाणं नैजं मतं स यतिः सपद्येव समीक्षिष्यत इति जल्पन्ननल्पकोपो नीलकण्ठो निरगात् । स्वशिष्यैः सह नीलकण्ठो मुनेरन्तिकं प्राप्य स्वपक्षं स्थापितवान् । तदा श्रीगुरुशिष्येण **सुरेश्वरेणो**क्तम् । भगवन् क्षणमात्रमीक्ष्यतां मदीयं वाक्पाटवमित्युक्त्वा विवादमारेभे । ततः परं स्वयमेव वादविषयं स्वीकृत्य नीलकण्ठाशङ्कासहस्रं युक्तिसहस्रोपबृंहितवचनैः परिहृत्य स्वीयमद्वैतमतं प्रसाध्य यतिवर्यः शैवं मतं निराचकार । अमुना प्रकारेण जितो नीलकण्ठो गर्वेण सहैव स्वभाष्यमपि विसृज्य पुनर्हरदत्तप्रमुखैरात्मशिष्यैः सह महर्षिं प्राप्तवान् । मनीषिधुर्यवर्यं नीलकण्ठं यतिवरेण निर्जितमाकर्ण्यो**दयनादयः** कवीन्द्राः परं चकम्पिरे । अथ सौराष्ट्रेषु तत्र तत्र देशेषु स्वीयानि भाष्याणि प्रसार्य सुपण्डितैर्देवैश्च स्तूयमानाः श्रीमदाचार्या द्वारवतीं पुरीं विविशुः ।

उदयनादिकवीन्द्राणां भयात्कम्पः ।

सौराष्ट्रविजयो द्वारकागमनं च ।

एवं पाञ्चरात्रशैवशाक्तसौरप्रमुखानात्मवशंवदान्विधायोज्जयिनीपुरीम-

पाञ्चरात्रमतखण्डनमुज्जयिनीं प्रत्यागमनं भट्टभास्करपराजयश्च ।

यासिषुः । तत्र महाकालायतनं प्रविश्य तं प्रणम्योपविश्य भट्टभास्करायास्मदीयागमनवृत्तान्तं कथयेति पद्मपादं विससृजुः । तदा **भट्टभास्करः** साहंकृत्याभाटमागत्य विवादं प्रारभत । अमर्त्यकीर्तिर्भगवान्भाष्यकारो युक्तिशतैः सुमतीन्द्रं तं **भट्टभास्करं** निरुत्तरं कृत्वा सम्पूर्णतया जित्वा श्रुतिविरुद्धं तद्ग्रन्थमपि ममन्थ । अव-

अवन्त्यां बाणमयूरदण्डिमुख्यानां पराजयः ।

न्तिषु प्रसिद्धान्**बाणमयूरदण्डिमुख्यान्** दलितविमतदर्पान् विदधौ निजभाष्यश्रवणोत्सुकांश्च चकार । अथ बाल्हिकेषु श्रीमदाचार्यवर्ये स्वशिष्येभ्यो भाष्यं विवृण्वति केचिदार्हतसंज्ञके विवसनसमये प्रवीणा असहि-

बाल्हिकेष्वागमनं विवसनमतखण्डनं च ।

नैमिशे भाष्यप्रसारः । दरदभरतशूरसेनकुरुपाञ्चालदेशपराजयः श्रीहर्षपराजयश्च ।

ष्णवो विवादलालसा बभूवुः । तानप्याचार्या भग्नदर्पान्कृत्वा **नैमिशे** भाष्यं वितत्य **दरदान् भरताञ्छूरसेनान् कुरुपाञ्चालादीन्** बहून्देशानजैषुः । पटुयुक्तिनिकृत्तसर्वशास्त्रं प्रभाकरभट्टपादभट्टभास्करादिगुरुभिरजय्यं **श्रीहर्षं** निर्जित्य स्ववशगं चक्रुः ।

ततः **कामरूपदेशं** प्राप्य शाक्तभाष्यकार**मभिनवगुप्तं** जिग्युः । स च

कामरूपदेशगमनमभिनवगुप्तपराजयस्तत्कृतकुविचारश्च ।

भग्नो मनसा व्यचिन्तयत् । नैवासौ यतिर्यया कया चिदपि रीत्या मद्वशगो भविता । अतो दैवतकृत्यैनैवेमं हरेयमिति विचिन्त्य स्वशाक्तभाष्यं विसृज्य भाष्यकारशिष्य इव बाह्यतो यतिवर्यमन्वसरत् । उदीच्यान्निजशिष्यान्कृत्वाऽङ्गवङ्गेषु स्वयशो विस्तार्य

अङ्गवङ्गाद्युदीच्यदेशपराभवो गौडदेशागमनं तत्र मुरारिमिश्रोदयनधर्मगुप्तपराजयश्च ।

**गौडाञ्जग्मुः** । तत्र **मुरारिमिश्रवर्यं चोदयनं** च **धर्मगुप्तं** च पराजितवन्तः । एवं चाचार्यैः सकलमतानि निरस्तानि । तेषां कानिचिन्मतान्यानन्दगिरिणा कथितानि । तद्यथा ।

शैवमतं, शिवमतैकदेशिमतं, भागवतमतं, वैष्णवमतं, पाञ्चरात्रमतं,

वैखानसमतं, कर्महीनवैष्णवमतं, हैरण्यगर्भमतं, सौरमतमग्निवादिमतं, महागणपतिमतं, हरिद्रागणपतिमतमुच्छिष्टगणपतिमतं, नवनीतस्वर्णसन्तानगणपतिमतं, शक्तिमतं, महालक्ष्मीमतं, वाग्देवतामतं, वामाचारमतं, कापालिकमतं, कापालिकैकदेशिमतं, चार्वाकमतं, सौगतमतं, जैनमतं, बौद्धमतं, मल्लारिमतं, विष्वक्सेनमतं, मन्मथमतं, कुबेरमतमिन्द्रमतं, यममतं, वरुणादिमतं, शून्यमतं, वराहमतं, लोकमतं, गुणमतं, सांख्यमतं, कपिलमतं, पीलुवादिमतं, कर्ममतं, चन्द्रमतं, राहुमतं, क्षपणकमतं, पितृमतं, शेषगरुडमतं, सिद्धमतं, गन्धर्वमतं, भूतवेतालमतं चेत्यनेकान्याचार्यैः खण्डितानि मतानि ।

इति सकलदिशासु द्वैतवार्तानिवृत्तौ<br>
स्वयमथ परितस्तारायमद्वैतवर्त्म ।<br>
प्रतिदिनमपि कुर्वन् सर्वसन्देहमोक्षम्<br>
रविरिव तिमिरौघे सम्प्रशान्ते महः स्वम् ॥

(माधवः.)

**॥ इति दिग्विजयो नाम पञ्चदशः सर्गः ॥ १५ ॥**

## १६ काश्मीरदेशे श्रीशारदापीठारोहणम् ॥

अभिनवगुप्तकृताभिचारक्रिया तद्योगाद्गुरुशरीरे भगंदररोगोत्पत्तिः ।

यदा श्रीमदाचार्या **अभिनवगुप्त**मनुत्तमं मांत्रिकं जिग्युस्तदा सोऽभ्यसूययाऽऽभिचारिकं कृतवान् येन वैद्यैरचिकित्स्यतमो भगंदराख्यो रोगो गुरूणां शरीरं व्याप्यातीव पीडयामास । एवंविधपीडापरिगतगुरुशुश्रूषा **तोटकाख्येन** शिष्येण कृता । तदा सर्वैः शिष्यैरुक्तम् । भगवन् यद्यपि भगवतो देहगतास्था नैव विद्यते तथाप्यन्तेवसन्तो वयं भृशं दुःखार्ताः । गुरावुपेक्षमाणेऽपि

शिष्याणां बोधः ।

शिष्यैरनुपेक्षणीयमिति शास्त्रम् । चिकित्सककोविदा अपि महीतले सहस्रशः सन्ति । इतस्ततस्तेऽतोऽन्वेष्टव्याः । भवति स्वस्थे वयं सर्वे स्वस्थाः । आचार्यैरुक्तम् । जन्मान्तरपापपाकोऽयं रोगः ।

अतो भोगेनैवायं क्षपणीयः । **यद्यस्मान्निमित्ततो देहः पतेत्पततु नाम। नायं रोगो मया चिकित्स्यते ।** इति गुरूक्तिं श्रुत्वा शिष्यैः प्रत्युक्तम् । लोकहितायापि तावद्भवद्भिर्देहो रक्ष्यः । अमुना प्रकारेण निर्बद्धा गुरवो वैद्यानयनायाज्ञां

शिष्यनिर्बन्धः ।

चक्रुः । ततः शिष्या अपि केचिज्जग्मुः । एवं बहुलान्देशानतिक्रम्य कस्यचिन्नरपतेर्देशे वैद्यान्दृष्ट्वा तान् गुरुसंनिधावानयन्। रोगस्तैश्चिकित्सितो बहुधा सत्क्रियाश्च विदधिरे ।

वैद्यानयनम् ।

केषुचिद्दिनेषु व्यतीतेषु गुरुभिरुक्तम् । भवतां भिषग्वराणामत्रागतानां महान्कालो यातः । अतो गेहं निवर्तध्वम् । यथा तथा मदीयावस्था भवेत् । इति बोधिता भिषजो विमनस एव स्वपुरीं प्रतिजग्मुः । एवं रोगकृते दुःखेऽतीव प्रबलेऽपि

वैद्यप्रतिगमनम् ।

निरन्तरं यतिवरो हि कामशासनचरणं सस्मार । स्मृतमहादेवाज्ञया नियुक्तौ देवावश्विनौ द्विजवेषं प्रविधाय सुभुजौ साञ्जनलोचनौ सुपुस्तकयुतौ मुनीन्द्रसमीपे विविशतुः । उपविश्य भो मुने **नायं रोगश्चिकित्सितुं शक्यो यतः परकृत्योत्पादितोऽयम् ।** इत्युदीर्य यथागतं प्रतिजग्मतुः । तदनन्तरं जातकोपः शत्रुवर्गेऽप्यनुकम्पिना यतिवरेण मुहुर्मुहुर्वारितोऽपि पद्मपादो रोगशमनाय परं मन्त्रं जजाप । ततोऽमुनैव रोगेण प्रतियातेन स मान्त्रिको **नीचोऽभिनवगुप्तो हतो मृतश्च ।**

अश्विनोरागमनम् ।

पद्मपादकोपोऽभिनवगुप्तमृत्युश्च ।

अथैकदा सैकते सायंकाले ब्रह्म ध्यायन् स्वर्गङ्गापूरेणार्द्रैर्वायुभिः सहागच्छन्तं योगीशं **गौडपादसंज्ञं** "अङ्गुल्यग्रासङ्गिरुद्राक्षमालामङ्गुष्ठाग्रेणासकृद्भ्रामयन्तं" ददर्श।

श्रीगौडपाददर्शनम् ।

तस्य पादावभ्यर्च्य बद्धाञ्जलिः पुरतो यतिवरस्तस्थौ । तं **श्रीगौडपादाः** प्राहुः । वत्स कच्चिद्गोविन्दनाम्नः सर्वां विद्यां वेत्सि । कच्चिदानन्दरूपं तत्त्वं वेत्सि । कच्चिद्भक्त्या युक्तास्ते शिष्यास्त्वां सेवन्ते ।इति पृष्टः श्रीश-

ङ्करो यतीन्द्रो " भक्त्युद्रेकाद्बाष्पपर्याकुलाक्षो " मूर्धन्यञ्जलिं बध्नन् व्याजहार । यद्यद्भवद्भिः पृष्टं तत्तत्सर्वं भविष्यति । **कारुण्याब्धेर्भवतः कटाक्षैर्दृष्टस्य किंस्याद्दुर्लभम् ।** श्रीगौडपादैरुक्तम् । वत्स मत्कृतकारिकाञ्जसुखसूर्या भाष्यादयस्त्वया निर्मिता इति गोविन्दपादमुखाच्छ्रुत्वाद्य ते दृष्टिगोचरोऽहमभूवम् । एवमुक्तः श्रीशङ्करः स्वकृतभाष्याणि श्रीगौडपादाचार्येभ्योऽदर्शयत् । तत्र माण्डूक्यगतभाष्ययुग्मं श्रुतिभाष्यं स्व-( गौडपादीय )-कारिकाभाष्यं चावलोक्य श्रीगौडपादाचार्यैरुक्तम् । मत्कारिकाभावविभेदिनोस्तादृशयोर्माण्डूक्यभाष्ययोः श्रवणेनोत्थितो हर्षो विदुषां वराय ते वरं दातुं प्रोत्साहयति तस्माच्छीघ्रं वरं वृणीष्वेति । श्रीशङ्करेणोक्तम् । भगवन् सर्वात्मना शुकमुनितुल्यमकलिपुरुषं परमात्मानं भगवन्तमद्याहं समपश्यम् । कोऽस्मादप्यपरो वरोऽस्ति । तथापि यदि भगवन्तः सन्तुष्टास्तर्हि **मम चिन्तनं सदैव चैतन्यतत्त्वविषयमस्त्विति वरं ददतु ।** तथास्त्विति व्याहृत्य श्रीगौडपादास्तत्रैवान्तरदधुः ।

श्रीशङ्करभाष्यावलोकनं वरप्रदानं च ।

एतद्वृत्तान्तं स्वशिष्येभ्यो मुदा निवेदयन्नेव स यतीन्द्रस्तां त्रियामामयापयत् ।

अथ प्रभाते श्रीमच्छङ्करः शिष्यैः स्वैः सह नित्यकर्तव्यं गङ्गायां विधिवत्सम्पाद्य तत्तीरे दिध्यासनलालसो यावदभूत्तावदेवैका वार्ता श्रवणपथमयासीत् । का सा ।

काश्मीरस्थशारदापीठवृत्तान्तश्रवणम् ।

जम्बुद्वीपे भारताख्यं मण्डलं तत्र काश्मीराभिधो देशः । तत्र शारदा वागधीशा वसति । तस्या गेहं चतुर्भिद्वारैर्युक्तम् । तत्र पीठमेकमास्ते । यस्तदारोहति सज्जनानां मध्ये स सर्वज्ञो भवति । तद्गेहं प्रवेष्टुं सर्वज्ञादन्येनैव क्षमन्ते । तस्य देवालयस्य प्राच्यपश्चिमोदीच्यद्वाराणि तत्तद्देशीया उद्घाट्य सर्वज्ञत्वं प्राप्ताः । विशेषतो **दाक्षिणात्याः पण्डिताः पिनद्धं तद्देवालयदक्षिणद्वारं नोद्घाटयितुं समर्थाः** । इति दक्षिणदेशीयपण्डितावहेलनापूर्वकं वचनमाकर्ण्य तद्द्वारमुज्जिघाटयिषुः श्रीगुरुः काश्मीरदेशं प्रति गन्तुं मनो विदधे ।

तत्र गत्वा दक्षिणदेशे विद्वांसो नैव विद्यन्त इति काश्मीरदेशप्रसृत-वार्ताविफलीकरणाय तच्छारदासदनदक्षिणद्वार-मुद्धाटयितुं श्रीमच्छङ्करगुरुर्देवालयं ययौ ।

काश्मीरगमनम् ।

वादिव्रातगजेन्द्रदुर्मदघटादुर्गर्वसङ्कर्षणः
श्रीमच्छङ्करदेशिकेन्द्रमृगराडायाति सर्वार्थवित् ।
दूरं गच्छत वादिदुःशठगजाः संन्यासदंष्ट्रायुधो
वेदान्तोरुवनाश्रयस्तदपरं द्वैतं वनं भक्षति ॥ (माधवः.)

इति पथि श्रावयन्तः शारदालयदक्षिणद्वारभूमिमाचार्याः प्रापुः । ततः कवाटमुद्धाट्य प्रविविक्षुं यतिवरं वादिसमूहः समुपगम्य न्यरौत्सीत् । आदौ **कणभुङ्मताश्रयो** यतीन्द्रं स्वशास्त्ररहस्यमेकमप्राक्षीत् । श्रीमद्भिराचार्यैस्तदुत्तरं सुसमीचीनरीत्या कथितमाकर्ण्य **कणादपक्षी** स्वयमेव निवृत्तः । ततो **गौतममतावलम्बी** सगर्वः समुपागमत् । सोऽपि निर्जितः प्रतिजगाम । ततो **नैयायिक**स्ततः **कापालिका** न्यरुन्धन् । तेऽपि निरुत्तरीकृताः । ततो बाह्यार्थविज्ञानशून्यवादैः प्रथिता **बौद्धाः** समागत्य न्यरुन्धत । ततो **दिगम्बरपक्षीय**स्ततो **जैमिनीयो** निरुत्तरो विदधे । अनेन प्रकारेण तेषु तेषु शास्त्रेषु तैस्तैः पण्डितवर्यैः पृष्टानि तानि तानि रहस्यानि युक्तिसहस्रैः साधाराणि विवृतान्याचार्यवर्यैः ।

शारदालयबाह्यप्रदेशागमनं वादिसमूहदर्शनं तत्कृतनिरोधश्च ।

सर्वशास्त्ररहस्यविवरणम् ।

**एवं ते सर्वे पण्डिता द्वाराण्युद्धाटय मार्गं दत्तवन्तः ।** अन्तः प्रविष्टं श्रीगुरुं शारदापीठमारुरुक्षं **शारदा** ह्यशरीरिण्या वाचाऽवोचत् ।

आचार्यपूजा देवालये प्रवेशश्च ।

मुने तव सर्वज्ञत्वे नास्ति कोऽपि सन्देहो यतस्त्वं वहिः पूर्वमेव तत्तच्छास्त्रेषु परीक्षितो दत्तमार्गश्चासि । **मत्पीठाधिरोहे न केवलं सर्वज्ञत्वं हेतुरपि तु परिशुद्ध-**

शारदाकृतनिरोधः ।

**तापि** । सा त्वय्यधुनास्ति वा नास्ति वेति मया परीक्ष्यमतः क्षणमात्रं स्थीयतां मेदं साहसं कार्षीः ।

त्वं चाङ्गनाः समुपभुज्य कलारहस्य-
प्रावीण्यभाजनमभूर्यतिधर्मनिष्ठः ।
आरोढुमीदृशपदं कथमर्हता ते
सर्वज्ञतेव विमलत्वमपीह हेतुः ॥ (माधवः.)

एवमुक्तः श्रीशङ्करः प्रत्यभाषत ।

उत्तरकथनम् ।

नास्मिञ्छरीरे कृतकिल्बिषोऽहम्
जन्मप्रभृत्यम्ब न सन्दिहेऽहम् ।
व्यधायि देहान्तरसंश्रयाद्य-
न्न तेन लिप्येत हि कर्मणान्यः ॥ (माधवः.)

अहं तावन्न संदिहे । अम्बायास्तव सन्देहो नास्तीति किमुवक्तव्यमित्याशयेन सम्बोधयति हेऽम्बेति । यत्तु त्वं चाङ्गना इत्याद्युक्तवती तत्र शृणु । **यत्कर्म देहान्तरसंश्रयाद्विहितं तेन कर्मणा नान्योऽयं देहो लिप्येत** । इदं तु लोकशास्त्रप्रसिद्धमेव ।

विबुधघोषः ।

इति तां शारदां निरुत्तरां कृत्वा सर्वज्ञपीठमधिरुह्य श्रीमज्जगद्गुरवः शुशुभिरे शङ्करयतीन्द्राः । त्वमेवेदं पीठमधिवस्तुमर्हसीति विबुधैरमोघश्लाघया गिरा जोघुष्यमाणो यतिपतिः श्रीशङ्करः शारदापीठगो जयति स्म ।

काणादः क्व प्रणादः क्व च कपिलवचः क्वाक्षिपादप्रवादः
काप्यन्धा योगकन्था क्व गुरुरतिलघुः क्वापि भाट्टप्रघट्टम् ।
क्व द्वैताद्वैतवार्ता क्षपणकविवृतिः क्वापि पाखण्डखण्ड-
ध्वान्तध्वंसैकभानोर्जयति यतिपतेः शारदापीठवासे ॥

(माधवः.)

ततो दिविषद्भिरपि दुन्दुभयो निजघ्निरे गुरुशिरसि च खस्तरुकुसुमानि

सुरसुमवृष्टिः । हर्षतोऽभिववृषिरे । इत्येवमति तुष्टो मुनिः श्रीशङ्करो निजमतश्रैष्ठ्याय न पुनर्मानहेतोः सर्वज्ञपीठमध्युवास ।

नानामठस्थापनं तत्र तत्र शिष्यविनिवेशनं च। अत्रैवाचार्यैः स्थापितनानामठेतिहासः संक्षेपेण कथ्यते ।

शृङ्गगिरावेकमठं, द्वारकायां शारदामठं, बदरिकाश्रमे ज्योतिर्मठं, जगन्नाथे गोवर्धनमठं, गङ्गोत्रौ चान्यदेकं मठमित्यादीनि मठान्याचार्यैः स्थापितानि । एतेभ्य एवाधुना दृश्यमानास्तास्ताः शाखाः समुदपद्यन्तेति क्रिस्तशकस्य १८९४, जुलैमासाङ्किते **प्राच्यप्रकाशे ( दि लाइट् ऑफ् दि ईस्ट** नामके कालिकातानगर्यां मुद्यमाण आङ्ग्लभाषालिखितमासिकपुस्तके ) लिखितमास्ते ।

१८९८ एप्रिल २६ भौमे **केसरिनामके** पुण्यपत्तनस्थे **वृत्तपत्रे पिनाकिसंज्ञापरिचिह्नितो** यो लेखस्तत्राचार्यस्थापितमठवृत्तान्तमधिकृत्य लिखितं तद्यथा ।

**प्राच्यां गोवर्धनमठं, प्रतीच्यां शारदामठं, दक्षिणस्यां शृङ्गगिरिमठमुदीच्यां च ज्योतिर्मठमित्याचार्यैश्चत्वारि मठानि स्थापितानि । शृङ्गगिरौ श्रीशङ्करस्य चिरं वसतिरभूद्द्रविडाचार्येति संज्ञा च गुरोः शङ्करस्य प्राप्तेति शृङ्गगिरिमठस्य प्राधान्यं गण्यते । पुष्पगिरिविरूपाक्षकुम्भकोणादिमठानि शृङ्गगिरेरुपमठान्येव । शृङ्गगिरिविद्यापीठाधिष्ठितगुरुपरम्पर्यां नाद्यापि** विच्छित्तिरवलोकिता । अविच्छिन्नैव सेदानीन्तनकालं यावच्चलिता । गोवर्धनमठं शारदामठमिति द्वयं नैवाधुना विद्यते । तत्पीठाधिष्ठितगुरूणां समाधेरनन्तरं तद्ग्रामस्थै राजाधिकारिभिश्च मिलित्वा ह्यनेकदा स्वेच्छयैव तन्मठाधिपत्यं कृतसंन्यासाय यस्मै कस्मैचिदप्युचिताय पुरुषाय दत्तम् ।

ज्योतिर्मठमपि नास्ति । प्रागेवानेकशतकेभ्यस्तन्मठं विच्छेदं प्राप ।

एवं मठानि निर्माय तत्र तत्र स्वशिष्यानाचार्या विनिवेशयामासुः ।

**शृङ्गगिरिपीठे श्रीसुरेश्वरः स्थापित** इति माधवः । तुङ्गभद्रातीरे शृङ्ग-

गिरौ श्रीशारदामठं निर्माय तत्र सुरेश्वरं स्थापयित्वा श्रीमदाचार्या **भारतीसम्प्रदायं** प्रवर्तयामासुरित्यानन्दगिरिरपि श्रीमदाचार्यसमकालीनत्वेन स्मृतो भणति । द्वारवतीमठे परमहंसेनैकेन लब्धे प्राचीनग्रन्थे ताव- त्सुरेश्वरो द्वारवतीपीठाध्यक्षश्चक्र इति लिखितमास्ते । **श्रीशृङ्गगिरिपीठे सुरेश्वराचार्यस्थापनाभवदित्येव बहुमतम् ।**

केरलकोकिलनामकमासिकपुस्तकस्य पञ्चमे भागे ( पुस्तके ) पञ्चमेऽङ्के ९७,९८,९९ पृष्ठेषु मठवृत्तान्तो लिखितस्तद्यथा ।

यैरैहिकसुखत्यागं विधाय लोकैकहितायैव स्वदेहो विनियुक्तो, यैर्ब्रह्मचर्येण सहैव संन्यासं संयोज्य स्वतेजोराशिराचन्द्रार्कं प्रज्वलितः कृतो, यैश्चतुरो वेदान् षट् शास्त्राणि च मथित्वा कर्मैकवादिनः स्वविद्यादृप्तान्विवादाग्रहग्रण्यो मण्डनमिश्रादीन्सहशारदान्पराजित्यारोपिताऽजरामरकीर्तिपताका, यैर्निर्दलितो जिनधर्मो,ऽधिष्ठितं काश्मीरशारदापीठं, वशीकृता निरुत्तरीकृता च वाग्देवी, यैरासेतुहिमाचलं निर्मिताः स्वमठाः, स्थापिताः स्वशिष्याः, प्रतिष्ठां यापितश्चाद्वैतसिद्धान्तः, स्थिरीकृतं स्वजगद्गुरुत्वं, यैरप्रतिमबुद्धिकौशलाद्ब्रह्मसूत्रगीतादिभाष्यनानारससंभृतकाव्यान्तरादीन्ग्रन्थान्विरच्य विद्वन्मणिगणाः प्रत्याययितस्वीयातुलपाण्डित्याः प्रमोदनिर्भरमानसतया विधुतोत्तमाङ्गा विदधिरे, यैश्चैतादृशान्यत्यद्भुतचरितानि द्वात्रिंशद्वायनावध्यायुष्येव प्रकाश्य स्वावतारः समापितस्तैः परमपूज्यैः **परमहंसपरिव्राजकाचार्यैः श्रीमच्छङ्कराचार्यैः** स्थापितेषु चतुर्षु मठेष्वग्र्यस्थानापन्नस्य **श्रीशृङ्गगिरिमठस्या**धुनिकाधिपतयः **श्रीसच्चिदानन्दशिवाभिनवविद्यानरसिंहभारत्यः** सन्ति ।

पुरा श्रीशृङ्गगिरिस्थानरमणीयतयाकृष्टहृदयाः श्रीमदाचार्याः खलु **विभाण्डकर्षि**सकाशात्तत्स्थानं गृहीत्वा रम्ये तुङ्गभद्रातीरे **संवत् ( २२ ) द्वाविंशत्यामतीव** सुन्दरमेकं मठं निर्ममिरे । तत्र मठे रम्यं पाषाणमयमेकं देवालयं विधाय तत्र **श्रीशारदापीठं** स्वयं संस्थाप्य स्वजितं स्वीकारितस्वीयशिष्यत्वं **मण्डनमिश्रं सुरेश्वराचार्याख्यया** तन्मठे प्रातिष्ठिपन् ।

सुरेश्वराचार्यस्तु महान् योगी वादपराजयानन्तरं **संवत् ३० विजयसंवत्सरे चैत्रशुक्ल ( १५ ) पौर्णमास्यां** तुर्याश्रमं स्वीकृत्य **६९५ शालिवाहनशके माघशुक्लद्वादश्यां** ( १२ ) समाधिगोऽभूत्। अनेन श्रीसुरेश्वराचार्यः ७९९ वर्षाणि शृङ्गगिरिमठाधिपत्यमुपाभौक्षीदिति **स्पष्टम्**। ( इदमधिकृत्य पूर्वपीठिकायां १९ पृष्ठं द्रष्टव्यम् )। पश्चात्तत्रत्यसिंहासनं क्रमेणाधितस्थुषां सम्प्रति सिंहासनारूढाः **श्रीमज्जगद्गुरवः श्रीसच्चिदानन्दशिवाभिनवविद्यानरसिंहभारत्यः श्रीसुरेश्वराचार्यतस्त्रयस्त्रिंशत्तमा अधिपतयो विद्यन्ते।**

**श्रीसङ्केश्वरादिमठेषु गृहस्थाश्रमिण**स्तुरीयाश्रमं स्वीकृत्य मठाधिपतयो भवन्ति न त्वयं शृङ्गगिरिमठे सम्प्रदायः। ये ये शृङ्गगिरिसिंहासनमिदानीन्तनकालं यावदारुरुक्षंस्ते ते सर्वे ह्याद्यगुरून् **सुरेश्वराचार्यान्** द्वादशाधिपतीञ्**श्रीमद्विद्यारण्यांश्च** त्यक्त्वा प्रथमाश्रम एव कृतसंन्यासा अभूवन्। इदं तु तावत्प्रसिद्धमेव यच्छ्रीसुरेश्वराचार्याणां पूर्वाश्रमे पत्नी सैव विदुषी **शारदा** या श्रीमदाचार्यैर्वादे निर्जिता। श्रीमद्विद्यारण्याः पूर्वाश्रमे **माधवराजाख्ययाऽऽनिगुन्दिसंस्थानेऽमात्यपदं विभूष्य बुक्कण्णाख्यस्य** नृपतेः सकाशे सकलराज्यतन्त्रमव्याहतवृत्त्या चालयामासुः।

आनन्दगिरिणा कथ्यते। श्रीमत्परमहंसपरिव्राजकाचार्यैः श्रीमच्छङ्कराचार्यैः स्वस्वशिष्यद्वारा षण्मतानि स्थापयाञ्चक्रिरे। तद्यथा।

**परमतकालानलेन शैवमतं, लक्ष्मणहस्तामलकाभ्यां षड्विधभेदविराजितं वैष्णवमतं, दिवाकरेण सौरमतं, त्रिपुरकुमारेण शक्तिमतं, गिरिराजकुमारेण गाणपत्यमतं, कापालिकेन बटुकनाथेन कापालिकमतमिति पुनः षण्मतानि स्थापितानीति।**

एवं च सुरेश्वरादीनृष्यशृङ्गाश्रमादौ विनिवेश्य कैश्चित्स्वशिष्यैः सह श्रीगुरुर्बदरिकाश्रमं प्राप्य तत्र विजितत्याजितसर्वदर्शनेभ्यः पातञ्जलशास्त्रनिष्ठितेभ्यः स्वशिष्येभ्यः स्वकृतभाष्याण्युपदिशन् कतिचिद्दिनानि निनाय।

आचार्यसाधितकार्य-निर्देशः ।

एवं कलिकल्मषघ्नैश्चरित्रैः श्रीशङ्करयतिवरस्य द्वात्रिंशत्समा व्यतीयुः । किमधुनाऽऽचार्याणां कर्तव्यमुर्वरितम् ।

आक्रान्तानि दिगन्तराणि यशसा साधीयसा भूयसा
विस्मेराणि दिगन्तराणि रचितान्यत्यद्भुतैः क्रीडितैः ।
भक्ताः स्वेप्सितभुक्तिमुक्तिकलनोपायैः कृतार्थीकृताः
भिक्षुक्ष्मापतिना किमन्यदधुना सौजन्यमातन्यताम् ॥

(माधवः)

केदारगमनम् । ऋषि-जनरक्षणार्थं तप्ततोय-नदीप्राप्त्यभ्यर्थना ।

देवगणागमनं कैलासा-गमनाय शङ्करं प्रति तदीयप्रार्थना च ।

ततो योगिवृन्दाधिपः **केदारकं** प्राप । तत्रातिसीतेनार्तस्य शिष्यसमूहस्य संरक्षणार्थमतुलप्रभावो मुनिराजः श्रीशङ्करो द्विजराजशेखरात्तप्तोदकं प्रार्थयामास । एवं प्रार्थितः शिवस्तप्ततोयलहरीं नदीं स्वपदारविन्दात्प्रावर्तयत् । **साद्यापि तत्र तप्ततोया रम्या नदी वहति** । एवं निर्वर्तितदेवकार्यं महेश्वरावतारं श्रीशङ्करयतीश्वरं कैलासं प्रापयितुं ब्रह्मेन्द्रादयः सुरसमुदायप्रवराः सर्षिसङ्घाः ससिद्धा आजग्मुः । विद्युद्वल्लीलक्षसंकाशैः संख्यातीतैर्विमानैः कार्त्स्न्येनाकाशमाच्छादयन्तो यतीशवेषं महादेवं स्तुत्वा मन्दारकुसुमैरर्चयन्तोऽब्रुवन् ।

भवानाद्यो देवः कवलितविषः कामदहनः
पुरारातिर्विश्वप्रभवलयहेतुस्त्रिनयनः ।
यदर्थं गां प्राप्तो भवमथन वृत्तं तदधुना
तदायाहि स्वर्गं सपदि गिरिशास्मत्प्रियकृते ॥

(माधवः)

नन्द्यागमनम् ।

श्रीशङ्करे निजधाम गन्तुं मनो विदधति शरत्कालीनहंसयोषिच्छुभ्रो नन्द्याख्यो वृषस्तत्पुरतः संनिद्धस्तस्थौ । तदा ।

कैलासारोहणम् ।

इन्द्रोपेन्द्रप्रधानैस्त्रिदशपरिवृढैः स्तूयमानः प्रसूनै-
र्दिव्यैरभ्यर्च्यमानः सरसिरुहभुवा दत्तहस्तावलम्बः ।
आरुह्योक्षाणमग्र्यं प्रकटितसुजटाजूटचन्द्रावतंसः
शृण्वन्नालोकशब्दं समुदितमृषिभिर्धाम नैजं प्रतस्थे ॥

( माधवः. )

आनन्दगिरिणा कथ्यते ।

ततः परं सर्वज्ञः सकलगुरुराचार्यः स्वशिष्यान् परमतकालानलादीन् यतींस्तदन्यांश्च तत्र तत्र विषयेषु प्रेष्य स्वयं स्वेच्छया स्वलोकं गन्तुमिच्छुः **काञ्चीनगरे** मुक्तिस्थले कदाचिदुपविश्य स्थूलशरीरं सूक्ष्मेऽन्तर्धाय सद्रूपो भूत्वा सूक्ष्मं कारणे विलीनं कृत्वा चिन्मात्रो भूत्वाऽ**ङ्गुष्ठपुरुष**स्तदुपरि पूर्णमखण्डमण्डलाकारमानन्दमीश्वरसन्निधौ प्राप्य सर्वजगद्व्यापकं **चैतन्यमभवत्** । सर्वव्यापकचैतन्यरूपेणाद्यापि तिष्ठति । तत्रत्या ब्राह्मणाः सर्वे शिष्याः प्रशिष्याश्चोपनिषद्गीताब्रह्मसूत्राणि सम्यक्पठन्तोऽत्यन्तशुचिस्थले गर्तं कृत्वा तत्र गन्धाक्षतबिल्वतुलसीप्रसूनादिभिः सम्पूज्य तच्छरीरं समाधिं चक्रुः । ततः प्रत्यहं क्षीरतर्पणक्षीरान्ननिवेदनादिभिः सर्वोपचारैर्विधिवदभ्यर्च्य ततो महापूजादिने बहुयतीनां ब्रह्मविदां ब्राह्मणानां कर्मज्ञाननिष्ठानामुत्तमानां च श्रीमदद्वैतविद्याप्रकाशकश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमच्छङ्करगुरुस्वामिनमुद्दिश्य परब्रह्मणो धिया स्वाद्वन्नमूलशाकसूपभक्ष्यघृतदध्यादिसमस्तव्यञ्जनयुक्तमन्नं वस्त्राभरणैः साकमीश्वरपूजामेवं चक्रुः । पूजां सर्वत्रैवं चक्रुः ।

एवं हि शङ्कराचार्यगुरुर्मुक्तिप्रदः सताम् ।

आकल्पमेतत्परमार्थबोधं
श्रीशङ्कराचार्यगुरोः कथार्थम् ।
सच्छिष्यमुक्तिप्रदमस्तु लोके
संसेवितं चार्यजनैरभेदम् ॥ (आनन्दगिरिः.)

**॥इति श्रीशारदापीठवासगो नाम षोडशः सर्गः ॥१६॥**

॥ समाप्तोऽयं ग्रन्थः ॥

इति शाङ्करचारित्रसारो गद्यात्मकः कृतः ।
वेङ्कटेशतनूजेन गुरुनाथेन भक्तितः ॥

स च

शके १८२० विलम्बिसंवत्सर उत्तरायणे वसंततौ वैशाखमासे शुक्ल-पक्षे प्रतिपदि गुरौ प्रारब्धः श्रीशङ्करकृपया नवम्यां समाप्तिं गतः ॥ श्रीशङ्करार्पणमस्तु ॥ शुभं भवतु ॥

# ॥ श्रीमच्छङ्कराचार्यस्थापितमठेतिवृत्तम् ॥

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीमहाकालेश्वराय नमः ॥ हरसिद्ध्यै नमः ॥

प्रथमः **पश्चिमाम्नायः शारदामठ** उच्यते ।
**कीटवारः** सम्प्रदायस्तस्य **तीर्थाश्रमौ** शुभौ ॥ १ ॥
**द्वारकाख्यं** हि क्षेत्रं स्याद्देवः **सिद्धेश्वरः** स्मृतः ।
**भद्रकाली** तु देवी स्यादाचार्यो **विश्वरूपकः** ॥ २ ॥
**गोमतीतीर्थ**ममलं ब्रह्मचारी **स्वरूपकः** ।
**सामवेदस्य** वक्ता च तत्र धर्मं समाचरेत् ॥ ३ ॥
**पूर्वाम्नायो** द्वितीयः स्याद्गोवर्धनमठः स्मृतः ।
**भोगवारः** सम्प्रदायो **वनारण्ये** पदे स्मृते ॥ ४ ॥
**पुरुषोत्तमं** तु क्षेत्रं स्याज्जगन्नाथोऽस्य देवता
**विमलाख्या** हि देवी स्यादाचार्यः **पद्मपादकः** ॥ ५ ॥
तीर्थं **महोदधिः** प्रोक्तं ब्रह्मचारी **प्रकाशकः** ।
**ऋगाह्वयस्तस्य** वेदस्तत्र धर्मं समाचरेत् ॥ ६ ॥
तृतीय**स्तूत्तराम्नायो ज्योतिष्मान्** हि मठो भवेत् ।
**आनन्दवारो** विज्ञेयः सम्प्रदायोऽस्य सिद्धिकृत् ॥ ७ ॥
पदानि तस्याख्यातानि **गिरिपर्वतसागराः** ।
**बदरीशाश्रमः** क्षेत्रं देवता च स एव हि ॥ ८ ॥
देवी **पुन्नागिरी** ज्ञेया आचार्य**स्तोटकः** स्मृतः ।
तीर्थं **त्वलकनन्दाख्यं नन्दाख्यो** ब्रह्मचार्यभूत् ॥ ९
तस्य वेदो **ह्यथर्वाख्य**स्तत्र धर्मं समाचरेत् ।
चतुर्थो **दक्षिणाम्नायः शृङ्गेरीति** मठो भवेत् ॥ १० ॥

भूरिवाराह्वयस्तस्य सम्प्रदायः सुशोभनः ।
पदानि त्रीणि ख्यातानि सरस्वती भारती पुरी ॥ ११ ॥
रामेश्वराह्वयं क्षेत्रमादिवाराहदेवता ।
कामाक्षी तस्य देवी स्यात्सर्वकामफलप्रदा ॥ १२ ॥
पृथ्वीधराह्व आचार्यस्तुङ्गभद्रेति तीर्थकम् ।
चैतन्याख्यो ब्रह्मचारी यजुर्वेदस्य पाठकः ॥ १३ ॥
उक्ताश्चत्वार आम्नाया यतीनां हि पृथक्पृथक् ।
ते सर्वे चतुराचार्यनियोगेन यथाविधि ॥ १४ ॥
प्रयोक्तव्याः स्वधर्मेषु शासनीयास्ततोऽन्यथा ।
कुर्वन्त एव सततमटनं धरणीतले ॥ १५ ॥
रुद्धाचारसम्प्राप्ता वाचार्याणां समाज्ञया ।
ोकान् संशीलयन्त्येव स्वधर्माप्रतिरोधतः ॥ १६ ॥
सिन्धुसौवीरसौराष्ट्रमहाराष्ट्रास्तथान्तराः ।
देशाः पश्चिमदिक्स्था ये शारदापीठसात्कृताः ॥ १७ ॥
अङ्गवङ्गकलिङ्गाश्च मगधोत्कलबर्बराः ।
गोवर्धनमठाधीना देशाः प्राचीव्यवस्थिताः ॥ १८ ॥
आन्ध्रद्रविडकर्णाटकेरलादिप्रभेदतः ।
शृङ्गेर्यधीना देशास्ते ह्यवाचीदिगवस्थिताः ॥ १९ ॥
कुरुकाश्मीरकाम्बोजपाञ्चालादिविभागतः ।
ज्योतिर्मठवशा देशा ह्युदीचीदिगवस्थिताः ॥ २० ॥
मर्यादैषा सुविज्ञेया चतुर्मठविधायिनी ।
तामेतां समुपाश्रित्य आचार्याः सुप्रतिष्ठिताः ॥ २१ ॥
स्वस्वराष्ट्रप्रतिष्ठित्यै सञ्चारः सुविधीयताम् ।
मठे तु नियतं वास आचार्यस्य न युज्यते ॥ २२ ॥
वर्णाश्रमसदाचारा अस्माभिर्ये प्रसाधिताः ।
रक्षणीयास्त एवैते स्वे स्वे भागे यथाविधि ॥ २३ ॥

यतो विनष्टिर्महती धर्मस्यात्र प्रजायते ।
मान्द्यं सन्त्याज्यमेवात्र दाक्ष्यमेव समाश्रयेत् ॥ २४ ॥
**परस्परविभागे तु प्रवेशो न कदाचन ।**
परस्परेण कर्तव्य आचार्येण व्यवस्थितिः ॥ २५ ॥
मर्यादाया विनाशेन लुप्येरन्नियमाः शुभाः ।
कलहागारसम्पत्तिरतस्तां परिवर्जयेत् ॥ २६ ॥
परिव्राडार्यमर्यादो मामकीनां यथाविधि ।
चतुःपीठाधिगां सत्तां प्रयुञ्ज्याच्च पृथक्पृथक् ॥ २७ ॥
शुचिर्जितेन्द्रियो वेदवेदाङ्गादिविशारदः ।
योगज्ञः सर्वतन्त्राणामस्मदास्थानमाप्नुयात् ॥ २८ ॥
उक्तलक्षणसम्पन्नः स्याच्चेन्मत्पीठभाग्भवेत् ।
अन्यथारूढपीठोऽपि निग्रहार्हो मनीषिणाम् ॥ २९ ॥
**एकएवाभिषेच्यः स्यादन्ते लक्षणसम्मतः ।**
**तत्तत्पीठे क्रमेणैव न बहुर्युज्यते क्वचित् ॥ ३० ॥**
अस्मत्पीठे समारूढः परिव्राडुक्तलक्षणः ।
अहमेवेति विज्ञेयो यस्य देव इति श्रुतेः ॥ ३१ ॥
सुधन्वनः समौत्सुक्यनिर्वृत्यै धर्महेतवे ।
देवराजोपचारांश्च यथावदनुपालयेत् ॥ ३२ ॥
केवलं धर्ममुद्दिश्य विभवो बाह्यचेतसाम् ।
विहितश्चोपकाराय पद्मपत्रनयं व्रजेत् ॥ ३३ ॥
सुधन्वा हि महाराजस्तदन्ये च नरेश्वराः ।
धर्मपारम्परीमेतां पालयन्तु निरन्तरम् ॥ ३४ ॥
**ब्रह्मक्षत्रकुले भूत्वा भारतीपीठवञ्चकः ।**
**परार्थाच्च्यवते चान्ते पैशाचीं योनिमाप्नुयात् ॥ ३५ ॥**
**शारदामठ आचार्य आश्रमाख्यो बहूत्तमः ।**
**गोवर्धनस्य विज्ञेयोऽरण्यनामा विचक्षणः ॥ ३६ ॥**

**ज्योतिर्मठस्य सततं पर्वताख्यो निगद्यते ।**
**शृङ्गेरमठे नित्यं भारतीबहुभावनः ॥ ३७ ॥**
निर्णयोऽसौ सुविज्ञेयः चतुःपीठाधिकारिणाम् ।
नात्र व्यत्यय आदेयः कदाचिदपि शीलिना ॥ ३८ ॥
मठाश्चत्वार आचार्याश्चत्वारश्च धुरन्धराः ।
सम्प्रदायाश्च चत्वार एषा धर्मव्यवस्थितिः ॥ ३९ ॥
चातुर्वर्ण्यं यथायोगं वाङ्मनःकायकर्मभिः ।
गुरोः पीठं समर्चेत विभागानुक्रमेण वै ॥ ४० ॥
धरामालम्ब्य राजानः प्रजाभ्यः करभागिणः ।
कृताधिकारा आचार्या धर्मतस्तद्वदेव हि ॥ ४१ ॥
**र्ग मूलं मनुष्याणां स चाचार्यावलम्बनः ।**
**ादाचार्यसुमणेः शासनं सर्वतोऽधिकम् ॥ ४२ ॥**
ाचार्याक्षिप्तदण्डास्तु कृत्वा पापानि मानवाः ।
र्नर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ४३ ॥
तानाचार्योपदेशो दण्डश्च पालयते........ ।
तस्माद्राजा आचार्या वनिद्यावनिन्द्यौ ॥ ४४ ॥
(तानाचार्योपदेशश्च राजदण्डश्च पालयेत् ।
तस्मादाचार्यराजानावनवद्यौ न निन्दयेत् ॥ ४४ ॥) ?
इत्येवं मनुरप्याह गौतमोऽपि विशेषतः ।
विशिष्टशिष्टाचारोऽपि मूलादेव प्रसिध्यति ॥ ४५ ॥
तस्मात्सर्वप्रयत्नेन शासनं सर्वसम्मतम् ।
आचार्यस्य विशेषेण ह्यौदार्यभरभागिणः ॥ ४६ ॥
धर्मपद्धतिरेषा हि जगतः स्थितिहेतवे ।
सर्ववर्णाश्रमाणां हि यथाशास्त्रं विधीयते ॥ ४७ ॥
**कृते विश्वगुरुर्ब्रह्मा त्रेतायामृषिसत्तमः ।**
**द्वापरे व्यास एव स्यात्कलावत्र भवाम्यहम् ॥ ४८ ॥**

अथोर्ध्वे शेष आम्नायास्ते विज्ञानैकविग्रहाः ।
पञ्चमस्तूर्ध्व आम्नायः सुमेरुर्मठ उच्यते ।
सम्प्रदायोऽस्य काशी स्यात्सत्यज्ञानभिदे पदे ॥ १ ॥
कैलासः क्षेत्रमित्युक्तं देवतास्य निरञ्जनः ।
देवी माया तथाचार्य ईश्वरोऽस्य प्रकीर्तितः ॥ २ ॥
तीर्थं तु मानसं प्रोक्तं ब्रह्मतत्त्वावगाहितम् ।
तत्र संयोगमार्गेण संन्यासं समुपाश्रयेत् ॥ ३ ॥
सूक्ष्मवेदस्य वक्ता च तत्र धर्मं समाचरेत् ।
षष्ठः स्वात्माख्य आम्नायः परमात्मा मठो महान् ॥ ४ ॥
सत्त्वतोषः सम्प्रदायः पदं योगमनुस्मरेत् ।
नमःसरोवरं क्षेत्रं परहंसोऽस्य देवता ॥ ५ ॥
देवी स्यान्मानसी माया आचार्यश्चेतनाह्वयः ।
त्रिपुटीतीर्थमुत्कृष्टं सर्वपुण्यप्रदायकम् ॥ ६ ॥
भवपाशविनाशाय संन्यासं तत्र चाश्रयेत् ।
वेदान्तवाक्यवक्ता च तत्र धर्मं समाचरेत् ॥ ७ ॥
सप्तमो निष्कलाम्नायः सहस्रार्कद्युतिर्मठः ।
सम्प्रदायोऽस्य सच्छिष्यः श्रीगुरोः पादुके पदे ॥ ८ ॥
तत्रानुभूतिः क्षेत्रं स्याद्विश्वरूपोऽस्य देवता ।
देवी चिच्छक्तिनाम्नी हि आचार्यः सद्गुरुः स्मृतः ॥ ९ ॥
सच्छास्त्रश्रवणं तीर्थं जरामृत्युविनाशकम् ।
पूर्णानन्दप्रसादेन संन्यासं तत्र चाश्रयेत् ॥ १० ॥

॥ इति मठेतिवृत्तं सम्पूर्णम् ॥

अथ सम्प्रदायचतुष्टयप्रारम्भः ॥

कीटादयो विशेषेण वार्यन्ते जीवजन्तवः ।
भूतानुकम्पया नित्यं कीटवारः स उच्यते ॥ १ ॥
भोगो विषय इत्युक्ते वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनां च भोगवारः स उच्यते ॥ २ ॥
आनन्देति विलासश्च वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनां चानन्दवारः स उच्यते ॥ ३ ॥
भूरिशब्देन सौवर्ण्यं वार्यते येन जीविनाम् ।
सम्प्रदायो यतीनां च भूरिवारः स उच्यते ॥ ४ ॥

॥ इति सम्प्रदायचतुष्टयं सम्पूर्णम् ॥

| दिक् | मठनामानि | देवी | आचार्याः |
|---|---|---|---|
| प्राच्याम् | | | हस्तामलकः |
| दक्षिणस्याम् | | शारदा | सुरेश्वरः |
| प्रतीच्याम् | | | पद्मपादः |
| उदीच्याम् | श्रीमठः | पूर्णगिरी | |

अयं वृत्तान्तः श्रीकूडलिगिमठाल्लब्धे मठाम्नायस्तोत्रे भिन्नतया लभ्यते । उर्वरितः सर्वो वृत्तान्तोऽग्रतो दत्तपत्रिकागतवृत्तान्तेन सुसङ्गतो भवति ।